THE

CHOWKHAMBÂ SANSKṚIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

NO. 95.

# षड्दर्शनसमुच्चयः ।

अर्थात्

बौद्ध–नैयायिक–कापिल–जैन–वैशेषिक–जैमिनीय–

दर्शनीयसंक्षिप्तनिरूपणपरो निबन्धः ।

आर्हतप्रवरश्रीहरिभद्रसूरिरचितः ।

परमार्हतमणिभद्रकृतलघुवृत्तिसमाख्यया व्याख्यया सहितः ।

कलियुगजनपावनावतारपरपुमर्थप्रेमावितरणपरायणश्री१०८भगवत्कृष्णचैतन्यचरणोप-

दिष्टैकवीथीमात्रपथिकेन श्री६मध्वसंप्रदायाचार्यसाहित्यदर्शनाचार्येण

श्रीगोस्वामिदामोदरलालशर्मणा संशोधितः ।

# SHADDARSHANASAMUCHCHAYA

BY

SHREE HARIBHADRASOORI:

With a commentary called Laghuvritti by

MANIBHADRA.

EDITED BY

Sâhityâchârya Pandit Dâmodara Lâl Goswâmi.

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT:

BENARES.

AGENTS:—OTTO HARRASSOWITZ, LEIPZIG:

PANDIT JYESHṬHARAMA MUKUNDJI, BOMBAY.

*Printed by Hari Dâs Gupta, Proprietor,*

AT THE VIDYA-VILASA PRESS & T. P. WORKS.

BENARES.

*Price Rupee One.*

*1905.*

श्रीः

# षड्दर्शनसमुच्चयस्य भूमिका ।

---ooo---

अंहः संहरदखिलं सकृदुदयादेव सकललोकस्य ।

तरणिरिव तिमिरजलधिं जयति जगन्मङ्गलं हरेर्नाम ॥

अयि षड्दर्शनीवल्लभाः !

लभतां ननु भवतामासेचनकतां चिररात्राय चिन्वानाया-स्तन्वानायाश्च हृद्यायाः किल वोऽस्याः षड्दर्शन्याः समुद्वेलो-त्कण्ठोदधेरुदग्रीविकासहस्रप्रदानं श्रीमतामात्मदर्शनाय सौखप्रा-कटनिकता भवत्सु पदम् ।

न हि खलु सर्वदर्शनसंग्रहादिजातीयनिबन्धैः समं पास्प-र्द्धदयं निबन्धो नामाकर्णनमात्रजनुर्भ्रमैर्भवादृशैर्हेलालवमपि जामितासध्रीचीनं नेयस्तत्त्वनिभालनमार्मिकतास्वयंवृतैः । नयना-ञ्चलार्पणायासमात्रेण चेदमीयरहस्यमनुबोभुवतो भवन्तो भवि-ष्यन्ति, कृतमर्थवादविडम्बनेन ।

अयञ्च निबन्धः सप्ताशीत्या पद्यैर्निर्मितो ग्रन्थकर्त्रा षड्द-र्शनसमुच्चयनाम्ना प्रसेधितः । दर्शनपदार्थश्चैतादृशस्थले दृश्यते ज्ञायत आत्माऽनेनेति ज्ञानसामान्यार्थकात् पश्यतेः करणल्युटा निष्पन्नदर्शनपदजन्यज्ञानविषयः चेतनवस्तुविचारप्रवणागमात्म-कः । दर्शनगतषट्संख्याविधायां तु तैर्थकानां भूयांसि मतानि । के चित् खलु पूर्वोत्तरमीमांसाद्वयं निरीश्वरसेश्वरसांख्यद्वयं-षोडशसप्तपदार्थाख्यायिन्यायद्वयं चेति मिलितानि दर्शनषट्कं-प्राहुः । अन्ये पुनः सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकप्र-भेदबौद्धेन जैनलौकायतिकाभ्याञ्च पूर्वदर्शनषट्कं द्वादशदर्शनीं-प्रतिजानते । परे तु मीमांसकसांख्यनैयायिकबौद्धजैनचार्वाकाणां-दर्शनानि षड्दर्शनीं संगिरन्ते । प्रकृतनिबन्धकारस्तु—

बौद्धं नैयायिकं सांख्यं जैनं वैशेषिकं तथा ।
जैमिनीयञ्च नामानि दर्शनानाममून्यहो—

इति तृतीयकारिकायां प्रकारान्तरेमेवान्वसरव । अपराणि चापि दर्शनान्येकेऽमन्यन्त, यानि सर्वदर्शनसंग्रहसर्वदर्शनशिरोमण्यादिनिबन्धेषु व्यक्तानि । परन्तु न ज्ञायते दर्शनविभागस्य स्वेच्छयैवेशानैस्तद्विभागकर्तृमहाभागैः केनागसाऽसौ तपस्विनी दर्शनसंख्यैतादृगपव्यवस्थाविपदमनायीति । कथं वा दोषैकदृग्भ्यो रोचतेऽप्यवधीरितनिजस्वरूपोऽदसीयो विभागोऽपरिगणयद्भ्यो "रसो वै स" इत्यादिप्रमाणमूर्धन्यनैकविधोपपत्तिप्रसाधितरसस्वरूपात्मप्रतिपादनपरभारतीयदर्शनम् । यतः, स्वसमभिव्याहृतपदार्थताऽवच्छेदकव्याप्यपरस्परासमानाधिकरणयावद्धर्म्मप्रकारकज्ञानानुकूलव्यापारात्मकं हि विभागं तज्ज्ञाः समभिप्रयन्ति । न चेत्थंभूतैतैभिरुक्तचरेष्वेकमपि विभागमाश्रयते । प्रकृतनिबन्धा त्वशेषदर्शनसम्राजं वेदान्तमवहेलयन् "दीपाधस्तिमिर"न्यायमेव समालम्बते । आस्तां वैषा दुर्व्यवस्था, कृतमनेनानुपक्रान्तविमर्शेन । किन्तु तिष्ठत्येवायं निबन्ध आपाततः पञ्चषदर्शनीयस्थवीयोऽनेकविषयनिरूपणेन प्रविविक्षुजनानां कतिपयपदार्थावबोधसंपदं वितरीतुं बद्धपरिकर इति नात्र विशयलेशोऽपि ।

अस्य च षड्दर्शनसमुच्चयस्य निर्म्माता परमार्हतो हरिभद्रसूरिः ।

अयं हि हरिभद्रसूरिर्जात्या ब्राह्मणः, चित्रकूटाद्रिनिकटवर्त्तिचित्तौडाख्यनगरराज्यासनारूढस्य जितारिनामकभूपस्य पुरोहितः प्रौढाभिरूपः कदा चित् क चनोपजैनोपाश्रयं—

चक्कीदुगं हरिपणगं, पणगं चक्कणकेसवो चक्की ।
केसवचक्की केसव, दुचक्की केसवचक्कीय इति—

गाथां याकिनीनाम्न्याः कस्याश्चिदार्हत्याः साध्व्या मुखान्निशम्योदितविस्मयातिशयस्तदर्थमवबुभुत्समानो भृशमागृहयाऽनुतां दधदप्यनुपलभमानोऽनुनीयमानयाऽपि निजधर्ममर्मरक्षणशिक्षणपरायणया तया गोपितां तद्गाथाप्रतिपत्तिं, तयैव सूचितं तदर्थावबोधवितरणपरिवृढं जैनविपश्चिदपश्चिमं जिनभट्टसूरिं तदवगतयेऽसर्थमन्ववरुणत् ।

तथाऽनुरोरुध्यमानमानसमेनमवेत्य जिनभट्टसूरिणाऽपि "विनाऽर्हतधर्म्मोपदेशमेषाऽनीषदवगमा गाथे" त्युक्तोऽयं तदैव विरज्याशिश्रियज्जिनोपदिष्टधर्मम् । अनन्तरञ्च क्रमेणानेकान्तजयपताका,ललितविस्तर,चैत्यवन्दनवृत्ति,दर्शनसप्ततिका,मुनिपतिचरित्र,वेदबाह्यतानिराकरण,श्रावकधर्मविधि,समरादित्यचरित्र,योगबिन्दुप्रकरणवृत्ति,षड्दर्शनसमुच्चय,प्रभृतिनिबन्धप्रकाण्डग्रेसरां चतुश्चत्वारिंशदुत्तरचतुर्दशशतीं ग्रन्थानां व्यररचत् । जन्मसमयश्च हरिभद्रसूरेः प्रायः पञ्चम्या वैक्रमशताब्द्याः समाप्त्युपकण्ठमनुमीयते, यतः षष्ठ्यास्तच्छताब्द्याः पञ्चत्रिंशे वर्षेऽयं पञ्चत्वमगमदिति निरदीधरन्नैतिहासिकाः।

तत्त्वप्रबोधादिनिर्म्माता हरिभद्रसूरिस्तु भिन्न एवास्मादत्यर्वाचीनः खर्त्तुदस्रेन्दुमितविक्रमादित्याब्देऽविद्यतेति ।

इदं च सर्वमेतदीयवृत्तं जामनगरवास्तव्यपण्डितश्रावकहीरालालसम्पादित "जैनधर्मप्राचीनेतिहास" नामकग्रन्थाश्रयादुदधारीत्यैतिह्यविदो विदाङ्कुर्वन्तु ।

टीकाकृन्मणिभद्रसूरिवृत्तं तु विहितेऽपि भूयसि मार्गणे नाल्पीयोऽप्यध्यगम्यद्यावधि, भविष्यन्त्यां तदाधिगतौ क्व चनावसरेऽवश्यमितिहासरसिकमनोविकासाय प्रकाशयिष्यत इत्याशंसमहे । अत्युपादेयस्य सटीकस्यास्य ग्रन्थस्याधुनाऽवध्यप्रकाशनमवेक्ष्य दूयमानमानसेनानुक्षणमप्रकाशितप्राचीनप्रशस्तभूरिदर्शननिबन्धप्रकटीकृतिबद्धपरिकरेण विद्याऽनुरागिणा सौजन्यशेवधिनाऽस्म-

द्भक्तवरेण श्रेष्ठिना श्रीहरिदासगुप्तेन भृशमेतच्छोधनाय प्रार्थितोऽहं व्यापृतोऽप्यन्यात्मीयावश्यकशास्त्रीयकार्यकार्येषूक्तश्रेष्ठिभक्तिमात्रवशंवदः समभ्युपागममेनत् ।
अस्य चैकं सटीकं पुस्तकं प्रायोऽशुद्धं जयपुरस्थसाहित्याचार्यविहारिलालशास्त्रिण उक्तश्रेष्ठिनैव तत आनाय्य मदान्तिकं प्रापितम्।

द्वितीयं च स्वकीयमेव श्रीबृन्दावनस्थश्री१०८भगवन्मदनगोपालपुस्तकालयस्थमहमानैषम् । एवं पुस्तकद्वयाश्रयतः समुपक्रान्तवान् मुद्रयित्वा प्रकाशनायाहममुं ग्रन्थम्। अस्वल्पीयसा समयेनैतत्प्रतिपाद्यं जिज्ञासूनाञ्च हिताय कारिकाऽऽत्मकं मूलमात्रं पर्यशीशिषम् । मध्ये चास्यागतानि प्राकृतवचनानि संस्कृत्य परिशिष्टात्मना समावीविशम् । अत्र चावधतोऽपि शोधने मानुष्यकनान्तरीयकदृष्टिदोषादिजन्मानोऽशुद्धयो मर्षणीयाः सौजन्यवद्भिर्भवद्भिः ।

इत्थमदः साङ्गं ग्रन्थरत्नं स्वकीयविद्याविलासनामके काशीस्थे यन्त्रालये श्रेष्ठिहरिदासेन स्वीयव्ययेनाविर्भावितं मत्तश्च जातसंशोधनमनुसृत्य मरालपद्धतिं भवादृशाश्चेद् दृक्पथपथिकीकुर्युर्भवेतां किल फलेग्रहिश्रमौ शोधकप्रकाशकाविसत्र न नाम मात्रयाऽपि सन्देहः ।

प्रीयताञ्चानेनास्मद्व्यापारेण सर्वान्तर्यामी सच्चिदानन्दविग्रहो भगवान् श्री१०८ राधिकारमण इत्याशास्ते

कलियुगजनपावनावतारभक्तिजीवजीवातुपरपुमर्थप्रेमवितरणपरायणश्री१०८भगवत्कृष्णचैतन्यचरणोपदिष्टैकवीथीपथिकः श्रीमध्वसम्प्रदाचार्य्यः साहित्यदर्शनाचार्य्यो—

दामोदरलालगोस्वामी ।

विजयादशम्याम्
सं० वै० १९६२

वाराणस्याम् ।

॥ श्रीः ॥

# षड्दर्शनसमुच्चयः ।

## श्रीहरिभद्रसूरिविरचितः

## मणिभद्रकृतया टीकया समलङ्कृतः ।

---:०:०:०:---

सज्ज्ञानदर्पणतलेऽविमलेऽत्र यस्य
ये केचिदर्थनिवहाः प्रकटीबभूवुः ।
तेऽद्यापि भान्ति कलिकालजदोषभस्म-
प्रोद्दीपिता इव शिवाय स मेऽस्तु वीरः ॥ १ ॥

जैनं यदेकमपि बोधविधायिवाक्य-
मेवं श्रुतिः फलवती भुवि येन चक्रे ।
चारित्रमाप्य वचनेन महत्तरायाः
श्रीमान्स नन्दतु चिरं हरिभद्रसूरिः ॥ २ ॥

सन्निधेहि तथा वाणि षड्दर्शनाङ्कषड्भुजे ।
यथा षड्दर्शनव्यक्तिस्पष्टने प्रभवाम्यहम् ॥ ३ ॥

व्यासं विहाय संक्षेपरुचिसत्त्वानुकम्पया ।
टीका विधीयते स्पष्टा षड्दर्शनसमुच्चये ॥ ४ ॥

इह हि श्रीजिनशासनप्रभावनाविभावकप्रभोदयभूरि-यशश्चतुर्दशशतप्रकरणकरणोपकृतजिनधर्मो भगवान् श्रीहरिभद्र-सूरिः षड्दर्शनप्रमाणपरिभाषास्वरूपजिज्ञासुशिष्यहितहेतवे प्र-

करणमारिप्समानो निर्विघ्नशास्त्रपरिसमाप्त्यर्थं स्वपरश्रेयोऽर्थं च समुचितेष्टदेवतानमस्कारपूर्वकमभिधेयमाह ।

**सद्दर्शनं जिनं नत्वा वीरं स्याद्वाददेशकम् ।**
**सर्वदर्शनवाच्योऽर्थः संक्षेपेण निगद्यते ॥ १ ॥**

अर्थो निगद्यतेऽभिधीयत इति सम्बन्धः । अर्थशब्दोऽत्राभिधेयवाचको ग्राह्यः । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि"त्यनेकार्थवचनात् । मयेत्यनुक्तस्यापि गतार्थत्वात् । किंविशिष्टोऽर्थः सर्वदर्शनवाच्य इति । सर्वाणि च तानि दर्शनानि बौद्धनैयायिकजैनवैशेषिकसांख्यजैमिनीयादीनि समस्तमतानि वक्ष्यमाणानि तेषु वाच्यः कथनीयः । किं कृत्वा जिनं नत्वा । सामान्यमुक्त्वा विशेषमाह । कं जिनं, वीरं वर्द्धमानस्वामिनम् । वीरमिति साभिप्रायम् । प्रमाणवक्तव्यस्य परपक्षोच्छेदादिसुभटवृत्तित्वात् । भगवतश्च दुःखसम्पादिविषमोपसर्गसहिष्णुत्वेन सुभटरूपत्वात् । तथा चोक्तम् ।

विदारणात्कर्मततेर्विराजना-
तपःश्रिया विक्रमतस्तथाऽद्भुतात् ।
भवत्प्रमोदः किल नाकिनायक-
श्चकार ते वीर इति स्फुटाभिधाम् ।

इति युक्तियुक्तं ग्रन्थारम्भे वीरजिननमस्करणं प्रकरणकृतः । यद्वाऽऽसन्नोपकारित्वेन युक्ततरमेव श्रीवर्द्धमानतीर्थकृतो नमस्करणम् । तमेव विशिनष्टि । किंभूतं सद्दर्शनं सत् शोभमानं दर्शनं शासनं सामान्यावबोधलक्षणं ज्ञानं सम्यक्त्वं वा यस्य स तमिति । ननु दर्शनचारित्रयोरुभयोरपि मुक्त्यङ्गत्वात् किमर्थं

सद्दर्शनमित्येकमेव विशेषणमाविष्कृतम् । न । दर्शनस्यैव प्राधान्यात् । यत्सूत्रम् ।

"सद्धेण चरित्ताउ दंसणमिह दिढयरं गहेयव्वं ।
सिज्झंति चरणरहिया दंशणरहिया न सिज्झंति" ॥

इति तद्विशेषणमेव युक्तम् । पुनः किंभूतं स्याद्वाददेशकम् । स्याद्विकल्पितो वादः स्याद्वादः सदसन्नित्यानित्याभिलाप्यानभिलाप्यसामान्यविशेषात्मकस्तं दिशति भावकेभ्य उपदिशति यस्तम् । अत्रादिमार्द्धे भगवतोऽतिशयचतुष्टयमाक्षिप्तम् । सद्दर्शनमिति दर्शनज्ञानयोः सहचारित्वाज्ज्ञानातिशयः । जिनं वीरमिति रागादिजेतृत्वादष्टकर्माद्यपायनिराकर्तृत्वाच्चापायापगमातिशयः । स्याद्वाददेशकमिति वचनातिशयः । ईदृग्विधस्य निरन्तरभक्तिभरनिर्भरसुरासुरनिकायनिषेव्यत्वमानुषङ्गिकमिति पूजाऽतिशयः ॥ १ ॥

कानि तानि दर्शनानीति व्यक्तितस्तत्सङ्ख्यामाह—

**दर्शनानि षडेवात्र मूलभेदव्यपेक्षया ।**
**देवतातत्त्वभेदेन ज्ञातव्यानि मनीषिभिः ॥ २ ॥**

अत्र जगति प्रसिद्धानि षडेव दर्शनानि । एवशब्दोऽवधारणे । यद्यपि भेदप्रभेदतया बहूनि दर्शनानि प्रसिद्धानि । यदुक्तं सूत्रे ।

"असियसयं किरियाणं अकिरियवाईण हुंति चुलसीई ।
अन्नाणिय सत्तट्ठी वेणइआणं च वत्तीसं" ।

इति त्रिषष्ट्यधिका त्रिशती पाषण्डिकानाम् । बौद्धानां चाष्टादश निकायभेदा, वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकादयो भेदाः । जैमिनेश्च शिष्यकृता बहवो भेदाः ।

"उत्पलः कारिकां वेत्ति तन्त्रं वेत्ति प्रभाकरः ।
वामनस्तूभयं वेत्ति न किंचिदपि रेवणः" ॥

अपरेऽपि बहूदककुटीचरहंसपरमहंसभाट्टप्राभाकरादयो बहवोऽन्तर्भेदाः। अपरेषामपि दर्शनानां तत्त्वदेवताप्रमाणादिभिन्नतया बहुभेदाः प्रादुर्भवन्ति । तथाऽपि परमार्थतस्तेषामेष्वेवान्तर्भावात्षडेवेति सावधारणं पदम् । ननु संघटमानानियतो भेदानुपेक्ष्य किमर्थं षडेवेत्याह । मूलभेदव्यपक्षया । मूलभेदास्तावत्षडेव षट्संख्यास्तेषां व्यपेक्षया तानाश्रित्येत्यर्थः । तानि दर्शनानि मनीषिभिः पण्डितैर्ज्ञातव्यानि बोद्धव्यानि । केन प्रकारेणेति । देवतातत्त्वभेदेन देवता दर्शनाधिष्ठायका,स्तत्त्वानि च मोक्षसाधकानि रहस्यानि, तेषां भेदस्तेन पृथक् पृथग् दर्शनदेवतादर्शनतत्त्वानि च ज्ञेयानीत्यर्थः ॥ २ ॥

तेषामेव दर्शनानां नामान्याह—

**बौद्धं नैयायिकं सांख्यं जैनं वैशेषिकं तथा ।**
**जैमिनीयं च नामानि दर्शनानाममून्यहो ॥ ३ ॥**

अहो इति इष्टामन्त्रणे । दर्शनानां मतानाममूनि नामानीति संग्रहः । ज्ञेयानीति क्रिया,ऽस्तिभवत्यादिवदनुक्ताऽप्यवगन्तव्या। तत्र बौद्धमिति बुद्धो देवताऽस्येति बौद्धं सौगतदर्शनम् । नैयायिकं पाशुपतदर्शनम् । तत्र न्यायः प्रमाणमार्गस्तस्मादनपेतं नैयायिकमिति व्युत्पत्तिः । सांख्यमिति कापिलदर्शनम् । आदिपुरुषनिमित्तेयं संज्ञा । जैनमिति जिनो देवताऽस्येति जैनमार्हतम् । वैशेषिकं काणाददर्शनम् । दर्शनदेवताऽऽदिसाम्येऽपि नैयायिकेभ्यो द्रव्यगुणादिसामग्र्या विशिष्टमिति वैशेषिकम् ।

---

१ इद चिन्त्यम् । इत्थं हि न्याय्यमिति स्यात् । नैयायिकेति पा॰ ४ सू॰ ४६ । इगणघटकन्यायशब्दाद्व्यतुर्वाद्विन्न्यतरार्थकठका निष्पद्यते ।

जैमनीयं जैमनिऋषिमतं भाट्टदर्शनम् । चः समुच्चयस्य दर्शकः । एवं तावत् षड्दर्शननामानि ज्ञेयानि शिष्येणेत्यवसेयम् ॥ ३ ॥

अथ द्वारश्लोके प्रथममुपन्यस्तत्वाद्बौद्धमतमेवादावाचष्टे—

**तत्र बौद्धमते तावद्देवता सुगतः किल ।**
**चतुर्णामार्यसत्यानां दुःखादीनां प्ररूपकः ॥४॥**

तत्र तस्मिन् बौद्धमते सौगतशासने । तावदिति प्रक्रमे सुगतो देवता बुद्धो देवता बुद्धभट्टारको दर्शनादिकरः किलेत्याप्तप्रवादे । तमेव विशिनष्टि । कथं भूतस्तत्त्वनिरूपकत्वेन, प्ररूपको दर्शकः कथयितेति यावत् । केषामित्याह । आर्यसत्यानाम् । आर्यसत्यनामधेयानां तत्त्वानाम् । कतिसंख्यानामिति चतुर्णां चतूरूपाणाम् । किं रूपाणामित्याह । दुःखादीनां दुःखसमुदयमार्गनिरोधलक्षणानाम् । आदिशब्दोऽवयवार्थोऽत्र । यदुक्तम् ।

"सामार्थ्येऽथ व्यवस्थायां प्रकारेऽवयवे तथा ।
चतुर्ष्वर्थेषु मेधावी आदिशब्दं तु लक्षयेत्" ॥

इति । एवंविधः सुगतो बौद्धमते देवता ज्ञेय इत्यर्थः ॥४॥

आदिममेव तत्त्वं विवृण्वन्नाह—

**दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः ।**
**विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥ ५ ॥**

दुःखं किमुच्यत इत्याशङ्कायां संसारिणः स्कन्धाः । संसरन्तीति संसारिणो विस्तरणशीलाः स्कन्धाः प्रचयविशेषाः । संसारेऽमी चयापचयरूपा भवन्तीत्यर्थः । ते च स्कन्धाः पञ्च प्रकीर्तिताः पञ्चसंख्याः कथिताः । के त इत्याह । विज्ञानं

वेदना संज्ञा संस्कारो रूपमेव चेति। तत्र विज्ञानमिति-विशिष्टं ज्ञानं सर्वक्षणिकत्वज्ञानम्। यदुक्तम्।

"यत् सत्तत् क्षणिकं यथा जलधरः सन्तश्च भावा इमे
सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा च सा।
नाप्येकैव विधाऽन्यदाऽपि परकृन्नैव क्रिया वा भवेद्
द्वेधाऽपि क्षणभङ्गसंगतिरतः साध्ये च विश्राम्यति"॥ इति

विज्ञानम्। वेदनेति-वेद्यत इति वेदना पूर्वभवपुण्यपापपरिणामबद्धाः सुखदुःखानुभवरूपाः। भिक्षुर्भिक्षामटंश्चरणकण्टके लग्ने प्राह।

इत एकनवतेः कल्पे शक्त्या मे पुरुषो हतः।
तेन कर्मविपाकेन पादे विद्धोऽस्मि भिक्षवः! ॥

इत्यादि। संज्ञेति-संज्ञानामकोऽर्थः। सर्वमिदं सांसारिकं सचेतनाचेतनस्वरूपव्यवहरणं संज्ञामात्रं नाममात्रम्। नात्र कलत्रपुत्रमित्रभ्रात्रादिसंबन्धो घटपटादिपदार्थसार्थो वा पारमार्थिकः। तथा च तत्सूत्रम्। "तानीमानि भिक्षवः संज्ञामात्रं व्यवहारमात्रं कल्पनामात्रं संवृति मात्रमतीतोऽध्वा ऽनागतोऽध्वा सहेतुकोऽथ नाश आकाशं पुद्गला" इति। संस्कार इति-इह परभवविषयसंतानपदार्थनिरीक्षणप्रबुद्धपूर्वभवानुरूपसंस्कारस्य प्रमातुः स एवायं देवदत्तः, सैवैयं दीपकलिके, त्याद्याकारेण ज्ञानोत्पत्तिः संस्कारः। यदाह।

"यस्मिन्नेव हि सन्तान आहिता कर्मवासना।
फलं तत्रैव सन्धत्ते कार्पासे रक्तता यथा"।

इति। रूपमिति-रगरगायमाणपरमाणुप्रचयः। बौद्धमते हि स्थूलरूपस्य जगति विवर्तमानपदार्थजातस्य तद्दर्शनोपपत्तिभिर्निराक्रियमाणत्वात् परमाणव एव तात्त्विकाः। चः पुनरर्थः। एवेति पूरणार्थः॥ ८॥

दुःखनामधेयमार्यसत्यं पञ्चभेदतया निरूप्यार्थसमुदायतत्त्वस्वरूपमाह—

**समुदेति यतो लोके रागादीनां गणोऽखिलः ।**
**आत्मात्मीयस्वभावाख्यः समुदयः स संमतः ॥६॥**

यतो यस्माल्लोके रागादीनां रागद्वेषमोहानामखिलः समस्तो गणः समुदेत्युद्भवति । कीदृगित्याह । आत्मात्मीयस्वभावाख्यः । अयमात्मा,ऽयञ्चात्मीयः, पदे पदसमुदायोपचारादयं परोऽ,यञ्च परकीय, इत्यादिभावो रागद्वेषनिबन्धनं, तदाख्यस्तन्मूलो रागादीनां गणः । आत्मात्मीयरूपेण रागरूपः, परपरकीयपरिणामेन द्वेषरूपो, यतः समुदेति स समुदयः । समुदयो नाम तत्त्वं, सम्मतो बौद्धदर्शनेऽभिमत इति ॥ ६ ॥

अथ तृतीयचतुर्थतत्त्वे प्रपञ्चयन्नाह—

**क्षणिकाः सर्वसंस्कारा इत्येवं वासना तु या ।**
**स मार्ग इति विज्ञेयो, निरोधो मोक्ष उच्यते ॥७॥**

सर्वसंस्काराः क्षणिकाः । सर्वेषां विश्वत्रयाविवरविवर्तमानानां घटपटस्तम्भाम्भोरुहादीनां द्वितीयादिक्षणेषु स एवायं स एवायमित्याद्युल्लेखेन ये संस्कारा ज्ञानसन्ताना उत्पद्यन्ते ते विचारगोचरगताः क्षणिकाः । यत्प्रमाणयन्ति. सर्वं सत् क्षणिकमक्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधादिति वादस्थलमभ्यूह्यं क्षणिकत्वाविशेषकम् । विशेषोपपत्तिश्च समग्रं तावदौत्पत्तिकं पदार्थकदम्बकं घटपटादिकं मुद्गरादिसामग्रीसाकल्ये विनश्वरमाकलय्यते । तत्र योऽस्य प्रान्तावस्थायां विनाशस्वभावः स पदार्थोत्पत्तिसमये विद्यते, न वा, । अथ विद्यते चेदापतितं

तदुत्पत्तिसमयानन्तरमेव विनश्वरत्वम् । अथेदृश एव स्वभावो यत्कियन्तमपि कालं स्थित्वा विनष्टव्यम् । एवञ्चेन्मुद्गरादिसन्निधानेऽप्येष एव तस्य स्वभाव इति भूयोऽपि तावत्काले स्थेयम्। एवं मुद्गरादिघातशतपातेऽपि न विनाशो जातं कल्पान्तस्थायित्वं घटस्य । तथा च जगद्व्यवहारव्यवस्थालोपपातकपङ्किलतेत्यभ्युपेयमनिच्छताऽपि क्षणक्षयित्वं पदार्थानाम् ।प्रयोगस्त्वेवम्। वस्तु; उत्पत्ति समये ऽपि विनश्वररूपं, विनश्वरस्वभावत्वाद्, यद्विनश्वरं तदुत्पत्तिसमयेऽपि तत्स्वरूपं यथाऽन्त्यक्षणवर्त्तिघटस्य स्वरूपं, विनश्वरस्वभावं च रूपरसादिकमुदयत एवारभ्येति स्वभावहेतुः । ननु यदि क्षणक्षयिणो भावाः कथं तर्हि स एवायमिति वासनाज्ञानम् । उच्यते। निरन्तरसदृशापरापरक्षणनिरीक्षणचैतन्योदयाद,विद्याऽनुबन्धाच्च पूर्वक्षणप्रलयकाल एव दीपकलिकायामिव सैवेयं दीपकलिकेति संस्कारमुत्पाद्य तत्सदृशमपरक्षणान्तरमुदयते। तेन समानाकारज्ञानपरम्परापरिचयचिरतरपरिणामान्निरन्तरोदयाच्च पूर्वक्षणानामत्यन्तोच्छेदेऽपि स एवायमित्यध्यवसायः प्रसभं प्रादुर्भवति । दृश्यते चावलूनपुनरुत्पन्नेषु नखकेशकलापादिषु स एवायमिति प्रतीतिः । तथेहापि किं न संभाव्यते सुजनेन । तस्मात्सिद्धं साधनमिदं "यत्सत्तत् क्षणिकमि"ति युक्तियुक्तश्च "क्षणिकाः सर्वसंस्कारा इत्येवं वासने"ति । प्रस्तुतार्थमाह । एवं या वासना स मार्गो नामार्यसत्यम्,इह बौद्धमते, विज्ञेयोऽवगन्तव्यः । तुशब्दः पाश्चात्त्यार्थसंग्रहः पूर्वसमुच्चयार्थे । चतुर्थमार्यसत्यमाह । निरोधः किमित्याशङ्कायां मोक्ष उच्यते । मोक्षोऽपवर्गः । सर्वक्षणिकत्वसर्वनैरात्म्यवासनारूपो निरोधो नामार्यसत्यमभिधीयत इत्यर्थः ॥ ७ ॥

अथ तत्त्वानि व्याख्याय तत्संलग्नान्येवायतनान्याह—

**पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।**
**धर्मायतनमेतानि द्वादशायतनानि च ॥ ८ ॥**

पञ्चसंख्यानीन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपाणि । शब्दाद्या विषयाः पञ्च, शब्दरूपरसस्पर्शगन्धरूपाः पञ्च विषया इन्द्रियव्यापारा इत्यर्थः । मानसं चित्तम् । धर्मायतनमिति धर्मप्रधानमायतनं चैत्यस्थानमिति । एतानि द्वादशसंख्यानि ज्ञातव्यानि न केवलमेतानि द्वादशायतनानि जातिजरामरणभवोपादानतृष्णावेदनास्पर्शनामरूपविज्ञानसंस्कारा अविद्यारूपाणि द्वादशायतनानि । चः समुच्चये । अमी सर्वेऽपि संस्काराः क्षणिकाः । शेषं तदेवेति ॥ ८ ॥

तत्त्वानि व्याख्यायाधुना प्रमाणमाह—

**प्रमाणे द्वे च विज्ञेये तथा सौगतदर्शने ।**
**प्रत्यक्षमनुमानं च सम्यग्ज्ञानं द्विधा यतः ॥ ९ ॥**

तथेति प्रस्तुतानुसन्धाने । सौगतदर्शने बौद्धमते । द्वे प्रमाणे विज्ञेये । चशब्दः पुनरर्थे । तदेवाह—प्रत्यक्षमनुमानं, च । अक्षमक्षं प्रति गतं प्रत्यक्षमैन्द्रियिकमित्यर्थः । अनुमीयत इत्यनुमानं लैङ्गिकमित्यर्थः । यतः सम्यग्ज्ञानं निश्चितावबोधो द्विधा द्विप्रकारः । सम्यग्ग्रहणं मिथ्याज्ञाननिराकरणार्थम् । प्रत्यक्षानुमानाभ्यामेवेत्यर्थः ॥ ९ ॥

पृथक्पृथग्दर्शनापेक्षलक्षणसांकर्यभीरु कीदृक् प्रत्यक्षमत्रग्राह्यमित्याशङ्कायामाह—

**प्रत्यक्षं कल्पनाऽपोढमभ्रान्तं तत्र बुध्यताम् ।**

---

१ षडायतनेति पदमधिकं क्वचित्पुस्तके ।

**त्रिरूपाल्लिङ्गतो लिङ्गिज्ञानं त्वनुमानसंज्ञितम्॥१०॥**

तत्र प्रमाणोभययां प्रत्यक्षं बुध्यतां ज्ञायतां शिष्येणेति। किंभूतं कल्पनाऽपोढं, शब्दसंसर्गवती प्रतीतिः कल्पना, तयाऽपोढं रहितं निर्विकल्पकमित्यर्थः। अन्यच्चाभ्रान्तं भ्रान्तिरहितं रगरगायमाणपरमाणुलक्षणं स्वलक्षणं हि प्रत्यक्षं निर्विकल्पकमभ्रान्तञ्च तद् घटपटादिबाह्यस्थूलपदार्थप्रतिबद्धं च ज्ञानं सविकल्पकम्। तच्च बाह्यस्थूलार्थानां तत्तन्मतानुमानोपपत्तिभिर्निराकरिष्यमाणत्वात्। नीलाकारपरमाणुस्वरूपस्यैव तात्त्विकत्वात्। ननु यदि बाह्यार्था न सन्ति, किंविषयस्तर्ह्ययं घटपटशकटादिबाह्यस्थूलप्रतिभास इति चेत्। निरालम्बन एवायमनादिवितथवासनाप्रवर्तितो व्यवहाराभासो निर्विषयत्वादाकाशकेशवत्स्वप्नज्ञानवद्वेति। यदुक्तम्।—

"नान्योऽनुभाव्यो बुद्ध्याऽस्ति तस्या नानुभवोऽपरः।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशत" इति॥
"बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते।
वासनालुठितं चित्तमर्थाभासे प्रवर्तत" इति॥

यदुक्तं निर्विकल्पकमभ्रान्तं च प्रत्यक्षमिति।

अनुमानलक्षणमाह—तु पुनः त्रिरूपात्पक्षधर्मत्वसपक्षसत्त्वविपक्षव्यावृत्तिरूपाल्लिङ्गतो धूमादेरुपलक्षणाद्यल्लिङ्गिनो वैश्वानरादेर्ज्ञानं तदनुमानसंज्ञितमनुमानप्रमाणमित्यर्थः। सूत्रे लक्षणं नान्वेषणीयमिति चरमपदस्य नवाक्षरत्वेऽपि न दोष इति॥१०॥

रूपत्रयमेवाह—

**रूपाणि पक्षधर्मत्वं सपक्षे विद्यमानता।**
**विपक्षे नास्तिता हेतोरेवं त्रीणि विभाव्यन्ताम्॥११**

हेतोरनुमानस्य त्रीणि रूपाणि विभाव्यन्तामिति संबन्धः । तत्र पक्षधर्मत्वमिति । साध्यधर्मविशिष्टो धर्मी पक्षः । यथा पर्वतोऽयं वह्निमान् धूमवत्त्वादत्र पर्वतः पक्षः, तत्र धर्मत्वम् । धूमवत्त्वं वन्हिमत्त्वेन व्याप्तं धूमोऽग्निं न व्यभिचरतीत्यर्थः । सपक्षे सत्त्वं यो यो धूमवान् स स वह्निमान् यथा महानसप्रदेशः । अत्र धूमवत्त्वेन हेतुना सपक्षे महानसे सत्त्वं वह्निमत्त्वमस्तीत्यर्थः । विपक्षे नास्तितेति यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा जलाशये, जलाशये हि वह्निमत्त्वं व्यावर्तमानं व्याप्यं धूमवत्त्वमादाय व्यावर्तते । एवं प्रकारेण हेतोस्त्रीणि रूपाणि ज्ञायन्तामित्यर्थः ॥ ११ ॥

उपसंहरन्नाह—

**बौद्धराद्धान्तवाच्यस्य संक्षेपोऽयं निवेदितः, ।**
**नैयायिकमतस्येतः कथ्यमानो निशम्यताम् ॥ १२**

अयं संक्षेपो निवेदितः कथितः निष्ठां नीतः । कस्य बौद्धराद्धान्तवाच्यस्य बौद्धानां राद्धान्तः सिद्धान्तस्तत्र वाच्यो ऽभिधातव्योऽर्थस्तस्य । इतोऽनन्तरं नैयायिकमतस्य शिवशासनस्य "कथ्यमानो निशम्यतां" संक्षेपः कथ्यमानः श्रूयतामित्यर्थः ॥ १२ ॥

तदेवाह—

**आक्षपादमते देवः सृष्टिसंहारकृच्छिवः ।**
**विभुर्नित्यैकसर्वज्ञो नित्यबुद्धिसमाश्रयः ॥ १३ ॥**

आक्षपादा नैयायिकास्तेषां मते शासने देवो दर्शनाधिष्ठायकः शैवो महेश्वरः स कथंभूतः सृष्टिसंहारकृत् सृष्टिः प्राणिनामुत्पत्तिः, संहारस्तद्विनाशः, सृष्टिश्च संहारश्चेति द्वन्द्वः तौ

करोतीति क्विपि तोऽन्तः। तथा हि। अस्य प्रत्यक्षोपलक्ष्यमाणचराचरस्वरूपस्य जगतः कश्चिदनिर्वचनीयमाहात्म्यः पुरुषः स्रष्टा ज्ञेयः। केवलसृष्टौ च निरन्तरोत्पद्यमानापारप्राणिगणस्य भुवनत्रयेऽप्यमातृत्वमिति संहारकर्ताऽपि कश्चिदभ्युपगन्तव्यः। यत्प्रमाणं, सर्वं धरणिधरणीधरतरुपुरप्राकारादिकं, बुद्धिमत्पूर्वकं कार्यत्वात्। यद्यत् कार्यं तत्तद्बुद्धिमत्पूर्वकं, यथा घटः। कार्यं चेदं, तस्माद् बुद्धिमत्पूर्वकमिति प्रयोगः। स भगवानीश्वर एवेत्यर्थः। व्यतिरेके गगनम्। न चायमसिद्धो हेतुः। भूभूधरादीनां स्वकारणकलापजन्यत्वेना,वयवितया, वा कार्यत्वस्य जगत्प्रसिद्धत्वात्। नापि विरुद्धानैकान्तिकदोषौ। विपक्षादत्यन्तव्यावृत्तत्वात्। नापि कालात्ययापदिष्टः। प्रत्यक्षानुमानोपमानागमाबाध्यमानधर्मधर्मित्वात्। नापि प्रकरणसमः। तत्परिपन्थिपदार्थस्वरूपसमर्थनप्रथितप्रत्यनुमानोदयाभावात्। अथ निर्वृतात्मवदशरीरत्वादेव न संभवति सृष्टिसंहारकर्तेश्वर इति प्रत्यनुमानोदयात्कथं प्रकरणसमदूषणाभाव इति चेत्। उच्यते। अत्र साध्यमान ईश्वररूपो धर्मी प्रतीतो, ऽप्रतीतो, वाऽनुमन्यते सुहृदा। अप्रतीतश्चेद्भवत्परिकल्पितहेतोरेवाश्रयासिद्धिदोषप्रसङ्गः। प्रतीतश्चेत्तर्हि येनैव प्रमाणेन प्रतीतस्तेनैव स्वयमुद्भावितस्वतनुरपि किमर्थं नाभ्युपगम्यत इति कथमशरीरत्वमतो न दुष्टो हेतुरिति साधूक्तं सृष्टिसंहारकृच्छिवः। तथा विभुः सर्वव्यापकः। एकनियतस्थानवृत्तित्वे ह्यनियतप्रदेशनिष्ठितानां पदार्थानां प्रतिनियतयथावन्निर्माणानुपपत्तेः। न ह्येकस्थानस्थितः कुम्भकारोऽपि दूरदूरतरघटघटनायां व्याप्रियते। तस्माद्विभुर्भगवान्। तथा नित्यैकः। नित्यश्चासावेकश्चेति, यतो नित्योऽत एव एकोऽप्रच्युतानुत्पन्नस्थिरैकरूपं नित्यम्। भगवतो ह्यनित्यत्वे

पराधीनोत्पत्तितव्यपेक्षतया कृतकत्वप्राप्तिः। स्वोत्पत्तावपेक्षितपरव्यापारो हि भावः कृतक इष्यत इति। अथ चेत्कश्चिज्जगत्कर्तारमपरमभिदधाति स एवानुयुज्यते। सोऽपि नित्यो,ऽनित्यो,वा नित्यश्चेदधिकृतेश्वरेण किमपराद्धम् । अनित्यश्चेत्तस्याप्यन्येनोत्पादकान्तरेण भाव्यमनित्यत्वादेव तस्याप्यन्येनेति नित्यानित्यवादविकल्पशिल्पशतस्वीकारे कल्पान्तेऽपि न जल्पसमाप्तिः। तस्मान्नित्य एव भगवान्। अन्यच्चैकोऽद्वितीयो बहूनां हि जगत्कर्तृत्वस्वीकारे परस्परं पृथक् पृथगन्योन्यमसदृशमतिव्यापारतयैकैकपदार्थस्य विसदृशनिर्माणे सर्वमसमञ्जसमापद्येतेति भगवानेक एवेति, युक्तियुक्तं नित्यैकेति विशेषणम्। तथा सर्वज्ञ इति सर्वपदार्थानां सर्वविशेषज्ञाता। सर्वज्ञत्वाभावे हि विधित्सितपदार्थोपयोगयोग्यजगत्प्रसृमरविप्रकीर्णपरमाणुकणप्रचयसम्यक्सामग्रीमीलनाक्षमतया याथातथ्येन पदार्थनिर्माणरचना दुर्घटा। सर्वज्ञश्च सन् सकलप्राणिनां संमीलितसमुचितकारणकलापानुरूपपारिमाण्डल्यानुसारेण कार्यवस्तु निर्मिमाणः स्वार्जितपुण्यपापानुमानेन च स्वर्गनरकयोः सुखदुःखोपभोगं ददानः केषां नाभिमतः। तथा चोक्तम्।—

"ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा।
अन्यो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः" ॥

इति। भूयोऽपि विशेषयन्नाह "नित्यबुद्धिसमाश्रय" इति शाश्वतबुद्धिस्थानं। क्षणिकबुद्धिमतो हि पराधीनकार्यापेक्षितया मुख्यकर्तृत्वाभावादनीश्वरत्वप्रसक्तिरिति । ईदृग्गुणविशिष्टः शिवो नैयायिकमतेऽभ्युपगन्तव्यः॥ १३ ॥

अथ तत्त्वानि प्ररूपयन्नाह—

**तत्त्वानि षोडशामुत्र प्रमाणादीनि तद्यथा।**

प्रमाणं च प्रमेयं च संशयश्च प्रयोजनम् ॥१४॥
दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवास्तर्कनिर्णयौ ।
वादो जल्पो वितण्डा च हेत्वाभासाश्छलानि च॥ १५
जातयो निग्रहस्थानान्येषामेवं प्ररूपणा, ।
अर्थोपलब्धिहेतुः स्यात्प्रमाणं तच्चतुर्विधम् ॥ १६

( त्रिभिर्विशेषकम् )

अमुत्रास्मिन् प्रस्तुते नैयायिकमते षोडश तत्त्वानि प्रमाणादीनि प्रमाणप्रभृतीनि । तद्यथेति । बालावबोधाय नामान्यप्याह । प्रमाण[1]-प्रमेय[2]संशय[3]प्रयोजन[4]दृष्टान्त[5]सिद्धान्ता[6]वयव[7]तर्क[8]निर्णय[9]वाद[10]जल्प[11]वितण्डा[12]हेत्वाभास[13]च्छल[14]जाति[15]निग्रहस्थानानां[16] तत्त्वज्ञानान्निश्रेयससिद्धिरिति षोडश । एषामेवं प्ररूपणेति । तत्त्वानाममुना प्रकारेण प्ररूपणा नाममात्रप्रकटनमित्यर्थः । अथैकैकस्वरूपमाह । तत्रादौ प्रमाणस्वरूपं प्रकटयन्नाह । अर्थोपलब्धिहेतुः प्रमाणं स्यात् । अर्थस्य पदार्थस्योपलब्धिर्ज्ञानं तस्य हेतुः कारणं प्रमाणं स्यादिति । परापरदर्शनापेक्षया प्रमाणानामनियतत्वात्संदिहानस्य संख्यामुपदिशन्नाह । तच्चतुर्विधमिति । तत्प्रमाणं चतुर्विधं ज्ञेयमिति ॥ १४ ॥ १५ ॥ १६ ॥

प्रत्यक्षमनुमानं चोपमानं शाब्दिकं तथा, ।
तत्रेन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारिकम् ॥१७॥
व्यवसायात्मकं ज्ञानं व्यपदेशाविवर्जितम् ।
प्रत्यक्ष,मितरन्मानन्तत्पूर्वं त्रिविधं भवेत् ॥१८॥

तत्र प्रमाणचातुर्विध्ये प्रत्यक्षं कीदृगिति सम्बन्धः । विशेषणान्याह । इन्द्रियार्थसन्निकर्षोत्पन्नमिति । इन्द्रियं चार्थश्चेति द्वन्द्वः । तयोः सन्निकर्षात्संयोगादुत्पन्नं जातम् । इन्द्रियं हि नैकव्यात्पदार्थे संयुज्यते । इन्द्रियार्थसंयोगाज् ज्ञानमुत्पद्यते । यदुक्तम् ।—

"आत्मा सहैति मनसा, मन इन्द्रियेण,
स्वार्थेन चेन्द्रिय,मिति क्रम एष शीघ्रम् ।
योगोऽयमेव मनसः किमगम्यमस्ति
यस्मिन्मनो व्रजति तत्र गतोऽयमात्मा ॥

तत्राव्यभि चारिकं,ज्ञानान्तरेण नान्यथाभावि । शुक्तिशकले कलधौतबोधो हीन्द्रियार्थसन्निकर्षोत्पन्नोऽपि व्यभिचारी दृष्टोऽतोऽव्यभिचारिकं ग्राह्यम् । तथा व्यवसायात्मकं व्यवहारसाधकम् । सजलधरणितले हि बहलशाद्वलवृक्षावल्यामिन्द्रियार्थसान्निध्योद्गतमपि जलज्ञानं तत्प्रदेशसंगमेऽपि स्नानपानादिव्यवहारासाधकत्वादप्रमाणम् । अतः सफलं व्यवसायात्मकमिति विशेषणम् । तथा व्यपदेशविवर्जितमिति । व्यपदेशो विपर्ययस्तेन रहितं, तथा ह्याजन्मकाचकामलादिदोषदूषितचक्षुषः पुरुषस्य धवलशङ्खे पीतज्ञानमुदेति तद्यद्यपि सकलकालं तन्नेत्रदोषाविरामादिन्द्रियार्थसंनिकर्षोत्पन्नमस्ति तथाऽप्यन्यवस्तुनोऽन्यथाबोधाच्च तद्यथोक्तलक्षणं प्रत्यक्षमिति प्रत्यक्षसाधकं विशेषणचतुष्टयमुक्तम् । साम्प्रतमनुमानमाह । इतरदन्यन्मानमनुमानमुपादिशति तदनुमानं पूर्वं प्रथमं त्रिविधं त्रिप्रकारकं भवेज्जायेत । पूर्वमितिपदेनानुमानान्तरभेदानन्त्समाह । तत्पूर्वं प्रत्यक्षपूर्वं चेति श्लोकद्वयार्थः ॥१७॥१८॥

अनुमानत्रैविध्यमाह—

**पूर्ववच्छेषवच्चैव दृष्टं सामान्यतस्तथा ।**

**तत्राद्यं कारणात्कार्यमनुमानमिह गीयते ॥ १९ ॥**

पूर्ववत्, शेषवत्, सामान्यतोदृष्टं, चेत्यनुमानत्रयम्। चः समुच्चये। एवेति पूरणार्थे। तथेति उपदर्शने। तत्र त्रिषु मध्ये, आद्यमनुमानमिह शास्त्रे कारणात्कार्यमनुमानमुदितं कारणान्मेघात्कार्यं वृष्टिलक्षणं यतो ज्ञायते तत्कारणकार्यनामानुमानं कथितमित्यर्थः ॥ १९ ॥

निदर्शनेन तमेवार्थं द्रढयन्नाह—

**रोलम्बगवलव्यालतमालमलिनत्विषः ।**
**वृष्टिं व्यभिचरन्तीह नैवंप्रायाः पयोमुचः ॥ २० ॥**

यथेति दृष्टान्तकथनारम्भे। रोलम्बाः भ्रमराः। गवलं माहिषं शृङ्गम्। व्याला गजाः, सर्पा, वा। तमाला वृक्षविशेषाः। सर्वेऽप्यमी कृष्णाः पदार्थाः स्वभावतो ज्ञेयाः। द्वन्द्वसमासो बहुव्रीहिश्च। एवंप्राया, एवंविधाः पयोमुचो मेघा वृष्टिं न व्यभिचरन्तीति। एवंप्राया इत्युपलक्षणेन परेऽपि वृष्टिहेतवोऽभ्युन्नत्यादिविशेषा ज्ञेयाः। यदुक्तम्।—

"गम्भीरगर्जितारम्भनिर्भिन्नगिरिगह्वराः।
तुङ्गत्तडिल्लतासङ्गपिशङ्गोत्तुङ्गविग्रहाः"
इत्यादयोऽपि वृष्टिं न व्यभिचरन्ति ॥ २० ॥

शेषवन्नामधेयं द्वितीयमनुमानभेदमाह—

**कार्यात्कारणानुमानं यच्च तच्छेषवन्मतम् ।**
**तथाविधनदीपूरान्मेघो वृष्टो यथोपरि ॥ २१ ॥**

यत्कार्यात्फलात्कारणानुमानं फलोत्पत्तिहेतुपदार्थावगमनं तच्छेषवदनुमानं मतं कथितं नैयायिकशासने। यथा तथाविध-

नदीपूरादुपरि मेघो वृष्टस्तथाविधप्रवहत्सलिलसम्भारभरितो यो नदीपूरः सरित्प्रवाहस्तस्मादुपरि शिखरिशिखरोपरि जलधाराभिवर्षणज्ञानं तच्छेषवत् । अत्र कार्यं नदीपूरः कारणं च पर्वतोपरि मेघो वृष्ट इति । उक्तं च नैयायिकैः ।—

"आवर्तवर्तनाशालिविशालकलुषोदकः ।
कल्लोलविकटास्फालस्फुटफेनच्छटाङ्कितः ॥
वहद्बहुलशेवालफलशाड्वलसंकुलः ।
नदीपूरविशेषोऽपि शक्यते न निवेदितुम्" ॥ इति ॥२१॥

तृतीयानुमानमाह—

**यच्च सामान्यतो दृष्टं तदेवं गतिपूर्विका ।**
**पुंसि देशान्तरप्राप्तिर्यथा सूर्येऽपि सा तथा ॥२२॥**

चः पुनरर्थे । यत् सामान्यतो दृष्टमनुमानं तदेवममुना प्रकारेण । यथा पुंसि पुरुषे देवदत्तादौ देशान्तरप्राप्तिर्गतिपूर्विका । एकस्माद्देशाद्देशान्तरगमनं गमनपूर्वकमित्यर्थः । यथोज्जयिन्याः प्रस्थितो देवदत्तो माहिष्मतीं पुरीं प्राप्तः । सूर्येऽपि सा तथेति, यथा पुंसि तथा सूर्येऽपि सा गतिरभ्युपगम्यते । यद्यपि गगने संचरतः सूर्यस्य नेत्रावलोकप्रसरणाभावेन गतिर्नोपलभ्यते, तथाऽप्युदयाचलात्सायमस्ताचलचूलिकाऽवलम्बनं गतिं सूचयति । एवं सामान्यतोदृष्टमनुमानं ज्ञेयमित्यर्थः ॥२२॥

अथ क्रमायातमपि शाब्दप्रमाणं स्वल्पव्यक्तत्वादुपेक्ष्यादावुपमानलक्षणमाह—

**प्रसिद्धवस्तुसाधर्म्यादप्रसिद्धस्य साधनम् ।**
**उपमानं समाख्यातं यथा गौर्गवयस्तथा ॥२३॥**

तदुच्यमानमुपमानमाख्यातं कथितं । यत्तदोर्नित्यसम्बन्धात्। यत्किम् अप्रसिद्धस्य साधनम् अज्ञायमानस्यार्थस्य ज्ञापनं क्रियते। प्रसिद्धधर्मसाधर्म्यादिति,आबालगोपालाङ्गनाविदितो योऽसौ धर्मोऽसाधारणलक्षणं तस्य साधर्म्यं समानधर्मत्वं तस्मादित्युपमानमाख्यातम्। दृष्टान्तमाह-यथागौर्गवयस्तथेति। यथा कश्चिदरण्यवासी नागरिकेण कीदृग्गवय इति पृष्टः स च परिचितगोगवयलक्षणो नागरिकं प्राह यथा गौस्तथा गवयः,खुरककुदलाङ्गूलसास्नाऽऽदिमान् यादृशोगौस्तथा जन्मसिद्धो गवयोऽपि ज्ञेय इत्यर्थः। अत्र प्रसिद्धो गौस्तत्साधर्म्यादप्रसिद्धस्य गवयस्य साधनमिति ॥२३॥

उपमानं व्यावर्ण्य शब्दप्रमाणमाह—

**शाब्दमाप्तोपदेशस्तु मानमेवं चतुर्विधम्, ।**
**प्रमेयं चात्मदेहार्थबुद्धीन्द्रियसुखादि च ॥२४॥**

तु पुनराप्तोपदेशः शाब्दम्। अवितथवादी हितश्चाप्तः प्रत्ययितजनस्तस्य य उपदेश आदेशवाक्यं तच्छाब्दम् आगमप्रमाणं ज्ञेयमिति। एवमुक्तभङ्गया मानं प्रमाणं चतुर्विधं चतुष्प्रकारं निष्ठितमित्यर्थः। अथ प्रमेयलक्षणमाह–"प्रमेयं त्वात्मदेहार्थबुद्धीन्द्रियसुखादि चेति" प्रमाणग्राह्योऽर्थः प्रमेयं, तु पुनरर्थे। आत्मा च देहश्चेति द्वन्द्वः। आदिशब्देन शेषाणामपि षण्णां प्रमेयार्थानां संग्रहः । तच्च नैयायिकसूत्र आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गभेदेन द्वादशविधं, तत्र सचेतनत्वकर्तृत्वसर्वगतत्वादिधर्मैरात्मा प्रमीयते। एवं देहादयोऽपि प्रमेयतया ज्ञेयाः । अत्र तु ग्रन्थविस्तारभयान्न प्रपञ्चित इतरग्रन्थेभ्योऽपि सुज्ञेयत्वाच्चेति ॥ २४ ॥

संशयादिस्वरूपमाह—

**किमेतदिति सान्दिग्धः प्रत्ययः संशयो मतः ।**
**प्रवर्तते यदर्थित्वात्तत्तु साध्यं प्रयोजनम् ॥२५॥**

दूरावलोकनेन पदार्थपरिच्छेदकधर्मेषु संशयानः प्राह-किमेतदिति । एतत्किं स्थाणुर्वा पुरुषो वेति, यः संदिग्धः प्रत्ययः स संशयो नाम तत्त्वविशेषो मतः संमतः तच्छासन इति । प्रयोजनमाह-तत्तु तत्पुनः प्रयोजनं नाम तत्त्वं यत्किमित्याह—अर्थित्वात्प्राणी साध्यं कार्यं प्रति प्रवर्तते । प्रतीत्यध्याहार्यम् । न हि निष्फलकार्यारम्भ इत्यर्थित्वादुक्तम् । एवं यत्प्रवर्तनं तत्प्रयोजनमित्यर्थः ॥२५॥

**दृष्टान्तस्तु भवेदेष विवादविषयो न यः, ।**
**सिद्धान्तस्तु चतुर्भेदः सर्वतन्त्रादिभेदतः ॥२६॥**

तु पुनरेष दृष्टान्तो नाम तत्त्वं भवेत् । यत्किमिति । विवादविषयो न, यस्मिन्नुपन्यस्ते वचने वादगोचरो न भवति । इदमित्थं भवति न वेति विवादो न भवतीत्यर्थः । तावच्चान्वयव्यतिरेकयुक्तोऽर्थः स्खलति यावन्न स्पष्टं दृष्टान्तोपष्टम्भः । उक्तं च ।

तावदेव चलत्यर्थो मन्तुर्गोचरमागतः ।
यावन्नोत्तम्भनेनैव दृष्टान्तेनावलम्ब्यते ॥

एष दृष्टान्तो ज्ञेयः । सिद्धान्तः पुनश्चतुर्भेदो भवेत् । कथमित्याह—सर्वतन्त्रादिभेदत इति । सर्वतन्त्रसिद्धान्त इति प्रथमो भेदः । आदिशब्दाद्भेदत्रयमिदं ज्ञेयम् । यथा प्रतितन्त्रसिद्धान्तोऽधिकरणसिद्धान्तोऽभ्युपगमसिद्धान्तश्चेति । अमी चत्वारः सिद्धान्तभेदाः । नाममात्रकथनमिदं, विस्तरग्रन्थेभ्यस्तु विशेषो ज्ञेयः ॥ २६ ॥

अवयवादितत्त्वत्रयस्वरूपमाह—

**प्रतिज्ञाहेतुदृष्टान्तोपनया निगमस्तथा ।**
**अवयवाः पञ्च तर्कः संशयोपरमो भवेत्॥२७॥**
**यथा काकादिसंपातात् स्थाणुना भाव्यमत्र हि, ।**
**ऊर्ध्वं सन्देहतर्काभ्यां प्रत्ययो निर्णयो मतः ॥२८॥**

अवयवाः पञ्चेति सम्बन्धः । पूर्वार्द्धमाह—प्रतिज्ञाहेतु-दृष्टान्तोपनया निगमनं चेति पञ्चावयवाः । तत्र प्रतिज्ञा, पक्षः कृशानुमानयं सानुमानित्यादि । हेतुर्लिङ्गवचनम्, धूमवत्त्वादि-त्यादि । दृष्टान्त उदाहरणवचनं, यो यो धूमवान् स स वह्निमान् यथा महानसप्रदेश इत्यादि । उपनयो हेतोरुपसंहारकं वचनं धूमवांश्चायमित्यादि । निगमनं हेतूपदेशेन पुनः साध्यधर्मोपसंह-रणं, तस्माद्वह्निमानित्यादि । इति पञ्चावयवस्वरूपनिरूपणम् अवयवतत्त्वं ज्ञेयमिति । तर्कः संशयोपरमो भवेत् । यथा काकेत्यादि । दूराद् दृग्गोचरे स्पष्टप्रतिभासाभावात् किमयं स्था-णुर्वा पुरुषो वेति संशयस्तस्योपरमेऽभावे सति तर्को भवेत् तर्को नाम तत्त्वं स्यात् । कथमित्याह—यथेति । दूरा-दूर्ध्वस्थं पदार्थं विलोक्य स्थाणुपुरुषयोः संदिहानोऽवहिती-भूय विमृशति । काकादिसंपातादादिशब्दाद्वल्ल्युत्सर्पणादयः स्थाणुधर्मा ग्राह्याः । वायसप्रभृतिसंबन्धादत्र स्थाणुना भाव्यं, कीलकेन भवितव्यम् । पुरुषे हि शिरःकम्पनहस्तचालनादिभिः काकपातानुपपत्तेः । एवं संशयाभावे तर्कतत्त्वं ज्ञेयमिति । ऊर्ध्व-मित्यादि पूर्वोक्तलक्षणाभ्यां संदेहतर्काभ्यामूर्ध्वमुत्तरं यः प्रत्ययः स्थाणुरेवायं पुरुष एवायमिति प्रतीतिविषयः, स निर्णयः निर्णय-नामा तत्त्वविशेषो ज्ञेयः । यत्तदावर्थसम्बन्धादनुक्तावपि ज्ञेयौ॥२८

वादतत्त्वमाह—

**आचार्यशिष्ययोः पक्षप्रतिपक्षपरिग्रहात् ।**
**यः कथाऽभ्यासहेतुः स्यादसौ वाद उदाहृतः ॥२६॥**

असौ वाद उदाहृतः कथितस्तज्ज्ञैरित्यर्थः । यः क इत्याह—कथाऽभ्यासहेतुः । कथा प्रामाणिकी तस्या अभ्यासः कारणम् । कयोराचार्यशिष्ययोः । आचार्यो गुरुरध्यापकः, शिष्यश्चाध्येता विज्ञेय इति । कस्मात् पक्षप्रतिपक्षपरिग्रहात् । पक्षः पूर्वपक्षः प्रतिज्ञाऽऽदिपरिग्रहः, प्रतिपक्ष उत्तरपक्षः पूर्वपक्षवादिप्रयुक्तप्रतिज्ञाऽऽदिप्रतिपक्षकोपन्यासप्रौढिः तयोः परिग्रहात्संग्रहादित्यर्थः । आचार्यः पूर्वपक्षमङ्गीकृत्याचष्टे । शिष्यश्चोत्तरपक्षमुररीकृत्य पूर्वपक्षं खण्डयति । एवं निग्राहकजयपराजयच्छलजात्यादिनिरपेक्षतयाऽभ्यासनिमित्तम् । पक्षप्रतिपक्षपरिग्रहेण यत्र गुरुशिष्यौ गोष्ठीं कुरुतः स वादो ज्ञेयः ॥ २९ ॥

अथ तद्विशेषमाह—

**विजिगीषुकथा या तु च्छलजात्यादिदूषणम् ।**
**स जल्पः, सा वितण्डा तु या प्रतिपक्षवर्जिता ॥३०॥**

स जल्प इति सम्बन्धः । यद् विजिगीषुकथायां विजयाभिलाषिवादिप्रतिवादिप्रारब्धप्रमाणोपन्यासगोष्ठ्यां सत्यां छलजात्यादिदूषणम् । छलं त्रिप्रकारम् । वाक्छलं, सामान्यच्छलम्, उपचारच्छलं चेति । जातयश्चतुर्विंशतिभेदाः । आदिशब्दान्निग्रहस्थानादिपरिग्रहः । एतैः कृत्वा दूषणं परोपन्यस्तपक्षादेर्दूषणजालमुत्पाद्य निराकरणम् । अभिमतं च स्वपक्षस्थापनेन सन्मार्गप्रतिपत्तिनिमित्ततया छलजात्याद्युपन्यासैः परप्रयोगस्य दूषणोत्पादनम् । तथा चोक्तम्—

"दुःशिक्षितकुतर्कांशलेशवाचालिताननाः ।
शक्याः किमन्यथा जेतुं वितण्डा दोषमाण्डिताः ॥
गतानुगतिको लोकः कुमार्गं तत्प्रतारितः ।
मा गादिति च्छलादीनि प्राह कारुणिको मुनिः" ॥

इति । संकटे प्रस्तावे च सति च्छलादिभिरपि स्वपक्षस्थापनमनुमतम् । परविजये हि धर्मध्वंसादिदोषसंभवस्तस्माद्वरं छलादिभिरपि जयः । प्रतिपक्षस्तेन विवर्जिता रहितेति प्रतिपक्षसाधनविहीनो वितण्डावादः । वैतण्डिको हि स्वाभ्युपगतपक्षमस्थापयन् यत्किंचिद्वादेन परोक्तं दूषयतीत्यर्थः ॥ ३० ॥

**हेत्वाभासा असिद्धाद्या, श्छलं कूपो नवोदकः ।
जातयो दूषणाभासाः पक्षादिर्दूष्यते न यैः ॥ ३१ ॥**

हेत्वाभासा ज्ञेया इति । के त इत्याह—असिद्धाद्या, असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमाः पञ्च हेत्वाभासा ज्ञेयाः । तत्र पक्षे धर्मत्वं यस्य नास्ति सोऽसिद्धः । विपक्षे सन् सपक्षे चासन् विरुद्धः । पक्षत्रयवृत्तिरनैकान्तिकः । प्रत्यक्षानुमानागमविरुद्धपक्षवृत्तिः कालात्ययापदिष्टः । विशेषाग्रहणे हेतुत्वेन प्रयुज्यमानः प्रकरणसमः । उदाहरणानि स्वयमभ्यूह्यानि । छलं, कूपो नवोदक इति, परोपन्यस्तवादे स्वाभिमतार्थान्तरकल्पनया वचनविघातश्छलम् । कथमित्याह—वादिना कूपो नवोदक इति कथायां प्रत्यग्रार्थवाचकतया नवशब्दप्रयोगे छलवादी नवसंख्यामारोप्य दूषयति । कुत एक एव कूपो नवसंख्योदक इति वाक्छलम् । प्रस्तावागतत्वेन शेषच्छलद्वयमप्याह-संभावनयाऽतिप्रसङ्गिनोऽपि सामान्यस्य हेतुत्वारोपणेन तन्निषेधः सामान्यच्छलम् । यथा अहो

नु खल्वसौ ब्राह्मणो विद्याचरणसंपन्न इति ब्राह्मणस्तुतिप्रसङ्गे कश्चिद्वदति संभवति ब्राह्मणे विद्याचरणसंपदिति । तच्छलवादी ब्राह्मणत्वस्य हेतुत्वमारोप्य निराकुर्वन्नभियुङ्क्ते । यदि ब्राह्मणे विद्याचरणसंपद्भवति व्रात्येऽपि सा भवेद्व्रात्योऽपि ब्राह्मण एवेति । औपचारिके प्रयोगे मुख्यप्रतिषेधेन प्रत्यवस्थानम्, उपचारच्छलं, यथा मञ्चाः क्रोशन्तीत्युक्ते परः प्रत्यवतिष्ठते कथमचेतना मञ्चाः क्रोशन्तीति छलत्रयस्वरूपं ज्ञेयमिति । जातय इत्यादि । दूषणाभासा जातयः । अदूषणान्यपि दूषणवदाभासन्त इति दूषणाभासाः । यैः, पक्षादिर्न दूष्यते, आभासमात्रत्वान्न पक्षदोषः समुद्भावयितुं शक्यते केवलं सम्यग्हेतौ । हेत्वाभासे चोत्कर्षापकर्षसमे जाती भवतः । तत्रैव प्रयोगे दृष्टान्तधर्मं कंचित्साध्यधर्मिण्यापादयन्नुत्कर्षसमां जातिं प्रयुङ्क्ते । यदि घटवत्कृतकत्वादनित्यः शब्दो घटवदेव मूर्तोऽपि भवेद्, न चेन्मूर्तो घटवदनित्योऽपि मा भूदिति शब्दे धर्मान्तरोत्कर्षमापादयति । अपकर्षस्तु घटः कृतकः सन्नश्रावणो दृष्ट, एवं शब्दोऽपि भवेद्, नो चेद् घटवदनित्योऽपि माभूदिति शब्दे श्रावणधर्ममपकर्षति । वर्ण्यावर्ण्याभ्यां प्रत्यवस्थानं वर्ण्यावर्ण्यसमे जाती भवतः । ख्यापनीयो वर्ण्यस्तद्विपरीतोऽवर्ण्यस्तावेतौ वर्ण्यावर्ण्यौ साध्यदृष्टान्तधर्मौ विपर्यस्यन् वर्ण्यावर्ण्यसमे जाती प्रयुङ्क्ते । यथाविधः शब्दधर्मः कृतकत्वादिना न तादृग् घटधर्मो न तादृक् शब्दधर्म इति साध्यधर्मदृष्टान्तधर्मौ हि तुल्यौ कर्तव्यौ । अत्र तु विपर्यासः, यतो यादृग्घटधर्मः कृतकत्वादि न तादृक् शब्दधर्मः । घटस्य ह्यन्यादृशं कुम्भकारादिजन्यं कृतकत्वम् । शब्दस्य हि ताल्वोष्ठादिव्यापारजमिति । धर्मान्तरे विकल्पेन प्रत्यवस्थानं विकल्पसमा जातिः । यथा कृतकं किंचिन्मृदु दृष्टं राङ्कवशय्याऽऽ-

दि, किञ्चित्कठोरं कुठारादि। एवं कृतकं किञ्चिदनित्यं भविष्यति घटादिकम्। किञ्चिन्नित्यं शब्दादीति। साध्यसाम्यापादनेन प्रत्यवस्थानं साध्यसमा जातिः। यथा घटः तथा शब्दः प्राप्तः, तर्हि यथा शब्दस्तथा घट इति। शब्दश्च साध्य इति घटोऽपि साध्यो भवेत्, ततश्च न साध्यं साध्यस्य दृष्टान्तो, विरुद्धलक्षणत्वान्न दृष्टान्तः स्यात्। न चेदेवं तथाऽपि वैलक्षण्यात्सुतरामदृष्टान्त इति। प्राप्त्यप्राप्तिविकल्पाभ्यां प्रत्यवस्थानं, प्राप्त्यप्राप्तिसमे जाती। यथा यदेतत्कृतकत्वं त्वया साधनमुपन्यस्तं तत्किं प्राप्य साधयत्यप्राप्य वा। प्राप्य चेद् द्वयोर्विद्यमानयोरेव प्राप्तिर्भवति न तत्सदसतोरिति द्वयोश्च सत्त्वात्किं कस्य साध्यं साधनं वा। अप्राप्यन्तु साधनमयुक्तमतिप्रसङ्गादिति। अतिप्रसङ्गापादनेन प्रत्यवस्थानं प्रसङ्गसमा जातिः। यथाऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते जातिवाद्याह—यद्यनित्यत्वे कृतकत्वं साधनं, कृतकत्वमिदानीं किं साधनं तत्साधने किं साधनमिति। प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमा जातिः। यथाऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते जातिवाद्याह—यथा घटः प्रयत्नानन्तरीयकोऽनित्योदृष्ट एवं प्रतिदृष्टान्त आकाशं नित्यमपि प्रयत्नानन्तरीयकं दृष्टं कूपखननप्रयत्नानन्तरमुपलम्भादिति। न चेदमनैकान्तिकत्वोद्भावनं, भङ्ग्यन्तरेण प्रत्यवस्थानात्। अनुत्पत्त्या प्रत्यवस्थानम् अनुत्पत्तिसमा जातिः। यथाऽनुत्पन्ने शब्दाख्ये धर्मिणि कृतकत्वं धर्मः क्व वर्तते, तदेवं हेत्वभावादसिद्धिरनित्यस्येति। साधर्म्यसमा वैधर्म्यसमा वा या जातिर्यथा पूर्वमुदाहृता, सैव संशयेनोपसंह्रियमाणा संशयसमा जातिर्भवति। यथा किं घटसाधर्म्यात्कृतकत्वादनित्यः शब्दः, किं वा तद्वैधर्म्येणाकाश-

साम्यान्निरवयवत्वान्नित्य इति। द्वितीयपक्षोत्थापनबुद्ध्या प्रयुज्यमाना सैव साधर्म्यसमा वैधर्म्यसमा वा जातिः प्रकरणसमा भवति। तत्रैवानित्यः शब्दः कृतकत्वाद् घटवदिति प्रयोगे, नित्यः शब्दः श्रावणत्वात् शब्दत्ववदिति, उद्भावनप्रकारभेदमात्रे सति नानात्वं द्रष्टव्यम्। त्रैकाल्यानुपपत्त्या हेतोः प्रत्यवस्थापनमहेतुसमा जातिः। यथा हेतुः साधनं, तत्साध्यात्पूर्वं पश्चाद्वा सह वा भवेत्। यदि पूर्वमसति साध्ये तत्कस्य साधनम्, अथ पश्चात्साधनं पूर्वं तर्हि साध्यं तस्मिंश्च पूर्वसिद्धे किं साधनेन, अथ युगपत्साध्यसाधने तर्हि तयोः सव्येतरगोविषाणयोरिव साध्यसाधनभाव एव न भवेदिति। अर्थापत्त्या प्रत्यवस्थानम् अर्थापत्तिसमा जातिः। यद्यनित्यसाधर्म्यात्कृतकत्वादनित्यः शब्दोऽर्थादापद्यते, नित्यसाधर्म्यान्नित्य इति। अस्ति चास्य नित्येनाकाशेन साधर्म्यं निरवयवत्वमित्युद्भावनप्रकारभेद एवायमिति। अविशेषापादनेन प्रत्यवस्थानमविशेषसमा जातिः। यथा यदि शब्दघटयोरेको धर्मः कृतकत्वमिष्यते तर्हि समानधर्मयोगात्तयोरविशेषे तद्वदेव सर्वपदार्थानामविशेषः प्रसज्यत इति। उपपत्त्या प्रत्यवस्थानमुपपत्तिसमा जातिः। यथा यदि कृतकत्वोपपत्त्या शब्दस्यानित्यत्वं, निरवयवत्वोपपत्त्या नित्यत्वमपि कस्मान्न भवति पक्षद्वयोपपत्त्याऽनध्यवसायपर्यवसानत्वं विवक्षितमित्युद्भावनप्रकारभेद एवायम्। उपलब्धेन प्रत्यवस्थानमुपलब्धिसमा जातिः। यथाऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति प्रयुक्ते प्रत्यवतिष्ठते न खलु प्रयत्नानन्तरीयकत्वमनित्यत्वे साधनं, साधनं तदुच्यते येन विना न साध्यमुपलभ्यते, उपलभ्यते च प्रयत्नानन्तरीयकत्वेन विनाऽपि विद्युदादावनित्यत्वं, शब्देऽपि क्व चिद्वायुवेगभज्यमानवनस्पत्यादिजन्ये तथेति।

अनुपलब्धिप्रत्यवस्थानादनुपलब्धिसमा जातिः। यथा तत्रैव प्रयत्नानन्तरयिकत्वहेतावुपन्यस्ते, स प्राह जातिवादी न प्रयत्नकार्यः शब्दः प्रागुच्चारणादस्त्येवासावावरणयोगात्तु नोपलभ्यते। आवरणानुपलम्भेऽप्यनुपलम्भान्नास्त्येव शब्द इति चेन्न। आवरणानुपलम्भेऽप्यनुपलम्भसद्भावादावरणानुपलब्धेश्चानुपलम्भादभावः। तदभावे चावरणोपलब्धेर्भावो भवति। ततश्च तदन्तरितमूलकीलोदकादिवदावरणोपलब्धिकृतमेव शब्दस्य प्रागुच्चारणादग्रहणमिति प्रयत्नकार्याभावान्नित्यः शब्द इति। साध्यधर्मनित्यानित्यत्वविकल्पेन शब्दनित्यताऽऽपादनं नित्यसमा जातिः। यथा अनित्यः शब्द इति प्रतिज्ञाते, जातिवादी विकल्पयति येयमनित्यता शब्दस्योच्यते सा किमनित्या नित्या वेति। यद्यनित्या तदियमवश्यमपायिनीत्यनित्यताया अभावान्नित्यः शब्दः। अथ नित्यैवेति तथाऽपि धर्मस्य नित्यत्वात्तस्य च निराश्रितस्यानुपपत्तेः तदाश्रयभूतः शब्दोऽपि नित्य एव, स चेन्न तदनित्यत्वे तद्धर्मनित्यत्वायोगादित्युभयथा नित्यः शब्द इति। एवं सर्वभावानित्यत्वोपपादनेन प्रत्यवस्थानमनित्यसमा जातिः। यथा घटसाधर्म्यमनित्यत्वेन शब्दस्यास्तीति, तस्यानित्यत्वं यदि प्रतिपाद्यते तद्घटेन सर्वपदार्थानामस्त्येव किमपि साधर्म्यमिति तेषामप्यनित्यत्वं स्यात्। अथ पदार्थान्तराणां तथाभावेऽपि नानित्यत्वं तर्हि शब्दस्यापि तन्मा भूदिति अनित्यत्वमात्रापादनपूर्वकविशेषोद्भावनाच्चाविशेषसमातो भिन्नेयं जातिः। प्रयत्नकार्यनानात्वोपन्यासेन प्रत्यवस्थानं कार्यसमा जातिः। यथाऽनित्यः शब्दः प्रयत्नानन्तरयिकत्वादित्युक्ते जातिवाद्याह—प्रयत्नस्य द्वैरूप्यं दृष्टं किं चिदसदेव तेन जन्यते यथा घटादिकं, किं चित्सदेवावरणव्युदासादिना

व्यज्यते यथा मृदन्तरितमूलकीलादि । एवं प्रयत्नकार्यनानात्वादेष प्रयत्नेन शब्दो व्यज्यते जन्यते वेति संशय इति संशयापादानप्रकारभेदाच्च संशयसमातः कार्यसमा जातिर्भिद्यते । तदेवमुद्भावनविषयविकल्पभेदेन जातीनामानन्त्ये संकीर्णोदाहरणविवक्षया चतुर्विंशतिजातिभेदा एते दर्शिता इति ।

दूषणाभासानुक्त्वा निग्रहस्थानमाह—

निग्रहस्थानमाख्यातं परो येन निगृह्यते ।
प्रतिज्ञाहानिसंन्यासविरोधादिविभेदवत् ॥ ३२ ॥

येन केन चिद्रूपेण परो विपक्षो निगृह्यते परवादी वचननिग्रहे पात्यते तन्निग्रहस्थानमाख्यातं कथितमिति । कति चिद्भेदान् नामतो निर्दिशन्नाह—प्रतिज्ञाहानिसंन्यासविरोधादिविभेदवत् । हानिसंन्यासविरोधाः प्रतिज्ञाशब्देन संबध्यन्ते । आदिशब्देन शेषानपि भेदान् परामृशति । एतद्दूषणजालमुत्पाद्यते येन तन्निग्रहस्थानम्। यदुक्तं—"विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्"। तत्र विप्रतिपत्तिः साधनाभासे साधनबुद्धि, दूषणाभासे च दूषणबुद्धिरिति। अप्रतिपत्तिः साधनस्यादूषणं, दूषणस्य चानुद्धरणम् । तद्धि निग्रहस्थानं द्वाविंशतिभेदम् । तद्यथा—[1]प्रतिज्ञाहानिः, [2]प्रतिज्ञाऽन्तरं, [3]प्रतिज्ञाविरोधः [4]प्रतिज्ञासंन्यासः, [5]हेत्वन्तरम्, [6]अर्थान्तरं, [7]निरर्थकम्, [8]अविज्ञातार्थम्, [9]अपार्थकम्, [10]अप्राप्तकालं, [11]न्यूनम्, [12]अधिकं, [13]पुनरुक्तम्, [14]अननुभाषणम्, [15]अज्ञानम्, [16]अप्रतिभा, [17]विक्षेपो [18]मतानुज्ञा, [19]पर्य्यनुयोज्योपेक्षणं, [20]निरनुयोज्यानुयोगः, [21]अपसिद्धान्तः, [22]हेत्वाभासः, । तत्र हेतावनैकान्तिकीकृते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्युपगतवतः प्रतिज्ञाहानिनाम निग्रहस्थानं भवति। यथा अनित्यः शब्द, ऐन्द्रियिकत्वाद् घटवदिति प्रतिज्ञासा-

धनाय वादी वदन् परेण सामान्यमैन्द्रियिकमपि नित्यं दृष्टमिति हेतावनैकान्तिकीकृते, यद्येवं ब्रूयात् सामान्यवद्घटोऽपि नित्यो भवति स एवं ब्रुवाणः शब्दनित्यत्वप्रतिज्ञां जह्यात् । प्रतिज्ञातार्थप्रतिषेधे परेण कृते तत्रैव धर्मिणि धर्मान्तरसाधनमभिदधतः प्रतिज्ञाऽन्तरनाम निग्रहस्थानं भवति । अनित्यः शब्द, ऐन्द्रियिकत्वादित्युक्ते तथैव सामान्येनैव व्यभिचारेणोदिते यदि ब्रूयाद् युक्तं सामान्यमैन्द्रियिकं नित्यं तद्धि सर्वगतमसर्वगतस्तु शब्द इति, सोऽयमनित्यः शब्द इति पूर्वप्रतिज्ञातः प्रतिज्ञाऽन्तरमसर्वगतः शब्द इति प्रतिज्ञाऽन्तरेण निगृहीतो भवति । प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधनाम निग्रहस्थानं भवति । गुणव्यातिरिक्तं द्रव्यं रूपादिभ्योऽर्थान्तरस्यानुपलब्धेरिति, सोऽयं प्रतिज्ञाहेत्वोर्विरोधो यदि गुणव्यतिरिक्तं द्रव्यं कथं रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः, अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः कथं गुणव्यतिरिक्तं द्रव्यमिति तदयं प्रतिज्ञाहेत्वोर्विरुद्धाभिधानात्पराजीयते । पक्षसाधने परेण दूषिते तदुद्धरणाशक्त्या प्रतिज्ञामेव निह्नवानस्य प्रतिज्ञासंन्यासनाम निग्रहस्थानं भवति । यथा अनित्यः शब्द ऐन्द्रियिकत्वादित्युक्ते तथैव सामान्येनानैकान्तिकतायामुद्भावितायां यदि ब्रूयात् क एवमाह नित्यः शब्द इति प्रतिज्ञासंन्यासात् पराजितो भवतीति । अविशेषाभिहिते हेतौ प्रतिषिद्धे तद्विशेषणमभिदधतो हेत्वन्तरनाम निग्रहस्थानं भवति । तस्मिन्नेव प्रयोगे तथैव सामान्येऽस्य व्यभिचारेण दूषिते जातिमत्त्वे सतीत्यादिविशेषणमुपाददानो हेत्वन्तरेण निगृहीतो भवति । प्रकृतादर्थान्तरं तदौपयिकमभिदधतोऽर्थान्तरनाम निग्रहस्थानं भवति । नित्यः शब्दः कृतकत्वादिति हेतुः । हेतुर्हिनोतेर्धातोस्तुप्रत्यये कृदन्तं

पदम्, पदं च नाम ताद्धितनिपातोपसर्गा इति प्रस्तुत्य नामादीनि व्याचक्षाणोऽर्थान्तरेण निगृह्यत इति । अभिधेयराहितवर्णानुपूर्वीप्रयोगमात्रं निरर्थकनाम निग्रहस्थानं भवति । यथा नित्यः शब्दः कचतटपानां गजडदवत्त्वाद् घझढधभवादित्येतदपि सर्वथाऽर्थशून्यत्वान्निग्रहणाय कल्पेत साध्यानुपयोगाद्वा । यत्साधनवाक्यं दूषणवाक्यं वा त्रिवारमभिहितमपि पर्षत्प्रतिवादिभ्यां बोद्धुं न शक्यते तदाऽविज्ञातार्थनाम निग्रहस्थानं भवति । पूर्वापरासंगतपदसमूहप्रयोगादप्रतिष्ठितवाक्यार्थमपार्थकनाम निग्रहस्थानं भवति, दश दाडिमानि षडपूपा इति । प्रतिज्ञाहेतूदाहरणोपनयनिगमनवचनक्रममुल्लङ्घ्यावयवविपर्यासेन प्रयुज्यमानमनुमानवाक्यमप्राप्तकालनाम निग्रहस्थानं भवति । स्वप्रतिपत्तिवत् परप्रतिपत्तेर्जनने परार्थानुमानक्रमस्यापगमात् । पञ्चावयवे वाक्ये प्रयोक्तव्ये तदेकतमेनानुमानावयवेन हीनं न्यूननाम निग्रहस्थानं भवति, साधनाभावे साध्यसिद्धेरभावात् प्रतिज्ञाऽऽदीनां पञ्चानामपि साधनत्वात् । एकेनैव हेतुनोदाहरणेन वा प्रतिपादितेऽर्थे हेत्वन्तरमुदाहरणान्तरं वा वदतोऽधिकनाम निग्रहस्थानं भवति । शब्दार्थयोः पुनर्वचनं पुनरुक्तनाम निग्रहस्थानं भवति । अन्यत्रानुवादात् शब्दपुनरुक्तं नाम यत्र स एव शब्दः पुनरुच्चार्यते यथा नित्यः शब्दो नित्यः शब्द इति । अर्थपुनरुक्तं तु यत्र सोऽर्थः प्रथममन्येन शब्देनोच्चार्यते पुनः पर्यायान्तरेणोच्यते यथा अनित्यः शब्दो, विनाशी ध्वनिरिति । अनुवादे तु पौनरुक्त्यमदोषः । यथा हेतूपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति । पर्षदावेदितस्य वादिभिरभिहितस्यापि यदप्रत्युच्चारणं तदननुभाषणनाम निग्रहस्थानं भवति । पर्षदा विज्ञातस्यापि वादिवाक्यार्थस्य प्रतिवादि-

नो यदज्ञानं तदज्ञाननाम निग्रहस्थानं भवति। अविदितोत्तरविषयो हि किमुत्तरं ब्रूयात्, न चाननुभाषणमेवेदं, ज्ञातेऽपि वस्तुन्यनुभाषणासामर्थ्यदर्शनात्। परपक्षे गृहीतेऽप्यनुभाषितेऽपि तस्मिन्नुत्तराप्रतिपत्तिरप्रतिभानाम निग्रहस्थानं भवति। कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपनाम निग्रहस्थानं भवति। सिषाधयिषितस्यार्थस्याशक्यसाधनतामवसाय कथां विच्छिनत्तीदं मम करणीयं परिहीयते, पीनसेन कण्ठ उपरुद्धइत्याद्यभिधाय कथां विच्छिन्दन् विक्षेपेण पराजीयते। स्वपक्षेपरापादितदोषमनुद्धृत्य तमेव परपक्षे प्रतीतिमापादयतो मतानुज्ञानाम निग्रहस्थानं भवति। चौरो भवान् पुरुषत्वात् प्रसिद्धचौरवदित्युक्ते, भवानपि चौरः पुरुषत्वादिति ब्रुवन्नात्मनः परापादितचौरत्वदोषमभ्युपगतवान् भवतीति मतानुज्ञया निगृह्यते। निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणनाम निग्रहस्थानं भवति। पर्यनुयोज्यो नाम निग्रहोपपत्त्याऽवश्यं नोदनीय, "इदन्ते निग्रहस्थानमुपनतमतो निगृहीतोऽसि" इत्येवं वचनीयस्तमुपेक्ष्य न निगृह्णाति यः स पर्यनुयोज्योपेक्षणेन निगृह्यते। अनिग्रहस्थाने निग्रहस्थानानुयोगान्निरनुयोज्यानुयोगनाम निग्रहस्थानं भवति। उपपन्नवादिनमप्रमादिनमनिग्रहार्हमपि "निगृहीतोऽसी"ति यो ब्रूयात्स एवाभूतदोषोद्भावनान्निगृह्यत इति। सिद्धान्तमभ्युपेत्य नियमात्कथाप्रसङ्गोऽपसिद्धान्तनाम निग्रहस्थानम्। यः प्रथमं कञ्चित्सिद्धान्तमभ्युपगम्य कथामुपाक्रमत, तत्र च सिषाधयिषितार्थसाधनाय परोपालम्भो यथा सिद्धान्तविरुद्धमाभिधत्ते सोऽपसिद्धान्तेन निगृह्यते। हेत्वाभासाश्च यथोक्ता असिद्धविरुद्धादयो निग्रहस्थानम् इति। भेदान्तरानन्त्येऽपि निग्रहस्थानानां द्वाविंशतिर्मूलभेदा निवेदिता इति।

अथोपसंहरन्नाह—

नैयायिकमतस्यैवं समासः कथितोऽधुना ।
सांख्याभिमतभावानामिदानीमयमुच्यते ॥ ३३ ॥

एवम् इत्थंप्रकारतया नैयायिकमतस्य शिवशासनस्य समासः संक्षेपोऽधुना कथितो निवेदितः साम्प्रतमेव निष्ठित इत्यर्थः। इदानीं पुनरयं समासः सांख्याभिमतभावानाम् उच्यते। सांख्याः कापिला इत्यर्थः। तदभिमता तदभीष्टा ये भावाः पञ्चविंशतितत्त्वादयस्तेषां संक्षेपोऽतः परं कथ्यत इत्यर्थः॥

तदेवाह—

एतेषा या समावस्था सा प्रकृतिः किलोच्यते ।
प्रधानाव्यक्तशब्दाभ्यां वाच्या नित्यस्वरूपिका॥ ३४॥

एतेषां सांख्यानां प्रकृतिः प्रीत्यप्रीतिविषादात्मकानां लाघवोपष्टम्भगौरवधर्माणां सत्त्वरजस्तमसां त्रयाणामपि गुणानां या साम्यावस्था समतयाऽवस्थितिः सा किल प्रकृतिरुच्यते, किलेत्याप्तप्रवादे, सा प्रकृतिः कथ्यते । अन्यच्च सा प्रधानाव्यक्तशब्दाभ्यां वाच्या प्रधानाव्यक्तशब्देन च प्रकृतिराख्यायते। शास्त्रे प्रकृतिः प्रधानमव्यक्तं चेति पर्याया न तत्त्वान्तरमित्यर्थः। तथा नित्यस्वरूपिका शाश्वतभावतया प्रसिद्धेत्यर्थः। उच्यते च नित्या नानापुरुषाश्रया च तद्दर्शनेन प्रकृतिर्यदाह—

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाऽऽश्रया प्रकृतिरिति।

स वेत्ति विश्वं न च तस्य वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम्" ॥

इत्यादिभावनया रागद्वेषादिदोषतिरस्कारपूर्वकं भावनीयमिति ।

अथ यथाऽवस्थितार्थव्यवस्थापकं तत्त्वोपदेशमाह—

अत एव पुरा कार्यो वेदपाठः प्रयत्नतः ।
ततो धर्मस्य जिज्ञासा कर्त्तव्या धर्मसाधनी ॥७०॥

यतो हेतोर्वेदाभिहितानुष्ठानादेव तत्त्वनिर्णयः, अत एव पुरा पूर्वं प्रयत्नतो यत्नाद्वेदपाठः कार्यः 'ऋग्यजुःसामाथर्वाणो वेदास्तेषां पाठः कण्ठपीठलुठत्पाठप्रतिष्ठा, नानुश्रवणमात्रेण सम्यगवबोधस्थिरता, ततोऽनन्तरं साधनीयपुण्योपचयहेतुधर्मस्य हेयोपादेयस्वरूपस्य वेदाभिहितस्य जिज्ञासा ज्ञातुमिच्छा कर्त्तव्या विधेया । वेदोक्ताभिधेयविधाने यतितव्यमित्यर्थः ।

वेदोक्तधर्मोपदेशमेवाह—

नोदनालक्षणो धर्मो, नोदना तु क्रियां प्रति ।
प्रवर्त्तकं वचः, प्राहुः स्वःकामोऽग्निं यजेद्यथा ॥७१॥

नोदनैव लक्षणं यस्य स नोदनालक्षणो धर्मः । तत्स्वरूपमेव सूत्रकृदाह । तु पुन,र्नोदनां क्रियां प्रति प्रवर्त्तकं वचः प्राहुः । वेदोक्तस्वर्गादिसाधकाम्नायस्य क्रियाप्रवर्त्तकं वचनं नोदनामाहुरित्यर्थः। शिष्यानुकम्पया तत्सूत्रेणैव दृष्टान्तयन्नाह—स्वःकामोऽग्निं यजेद्यथा । यथा येन प्रकारेण स्वःकामः स्वर्गाभिलाषी जनोऽग्निं यजेद् अग्निकार्यं कुर्यात् । यथाऽहुस्तत्सूत्रम् । अग्निहोत्रं जुहुयात्स्वर्गकाम इति ।

प्रमाणान्याह—

प्रत्यक्षमनुमानं च शब्दश्चोपमया सह ।
अर्थापत्तिरभावश्च षट् प्रमाणानि जैमिनेः ॥७२॥

जैमिनेः पूर्ववेदान्तवादिनः, षट् प्रमाणानि ज्ञेयानीति सम्बन्धः। यद्यपि प्राभाकराणां मते पञ्च प्रमाणानि, भाट्टानामेव षट्, तथाऽप्यत्र ग्रन्थकृत्सामान्यतः षट्सङ्ख्यामाचष्टे ।

प्रमाणनामानि निगदसिद्धान्येव, निरुक्तमाह—

तत्र प्रत्यक्षमक्षाणां संप्रयोगे सतां मतिः ।
आत्मनो बुद्धिजन्मेत्यनुमानं लैङ्गिकं पुनः ॥७३॥

तत्र प्रमाणषट्के, अक्षाणान्द्रियाणां, संप्रयोगे पदार्थैः सह संयोगे, सतामुपहितेन्द्रियाणां मतिर्बुद्धिरिदमित्यवबोधः, तत्प्रत्यक्षं प्रमाणं "भवती"त्यध्याहारः। यत्तदावनुक्ताप्यर्थसम्बन्धौ ज्ञेयौ । सतामिति–विदुषामदुष्टेन्द्रियाणामित्यर्थः। एतावता मरुमरीचिकायां जलभ्रमः, शुक्तौ रजतभ्रमश्चेन्द्रियार्थसंप्रयोगजोऽपि द्रष्टुरविकलेन्द्रियत्वाभावान्न प्रत्यक्षं तत्प्रमाणकोटिमधिशेते। अनुमानमाह—आत्मनो बुद्धिजन्मेत्यनुमानं लैङ्गिकः पुनः। आत्मा यदनुमिमीते स्वयं, तदनुमानमित्यर्थः। अनुमानलैङ्गिकयोः शब्दाभेदेऽप्यनुमीयत इत्यनुमानं, लिङ्गाज्जातं लैङ्गिकमिति व्युत्पत्तिभेदाद्भेदो ज्ञेय उभयशब्दकथनं तु बालावबोधार्थमेवेति ।

शाब्दं शाश्वतवेदोत्थ,मुपमानं प्रकीर्त्तितम् ।
प्रसिद्धार्थस्य साधर्म्यादप्रसिद्धस्य भाजनम् ॥७४॥

शाब्दमागमप्रमाणं शाश्वतवेदोत्थं, शाश्वतान्नित्याद्वेदाज्जातम्। आगमप्रमाणमित्यर्थः। शाश्वतत्वं च वेदानामपौरुषेयत्वादेव।

उपमानमाह—यत्प्रसिद्धार्थस्य प्रतीतपदार्थस्य साधर्म्यादप्रसिद्धस्य वस्तुनः साधनं तदुपमानं प्रमाणं प्रकीर्त्तितं कथितम् । यथा प्रसिद्धगोगवयस्वरूपो वनेचरोऽप्रसिद्धगवयस्वरूपं नागरिकं प्राह, "यथा गौस्तथा गवय"इति, भोः खुरककुदलाङ्गूलसास्नाऽऽदिमन्तं पदार्थं गामिति जानासि, गवयोऽपि तथास्वरूपो ज्ञेय इत्युपमानम् । अत्र सूत्रानुक्तावपि यत्तदावर्थसम्बन्धार्थमध्याहार्यौ ।

अर्थापत्तिमाह—

दृष्टार्थानुपपत्त्या तु कस्याप्यर्थस्य कल्पना ।
क्रियते यद्बलेनासावर्थापत्तिरुदाहृता ॥ ७५ ॥

असौ पुनरर्थापत्तिरुदाहृता कथिता, अर्थापत्तिप्रमाणं प्रोक्तमित्यर्थः । यद्बलेन कस्याप्यदृष्टस्यार्थस्य कल्पना क्रियते सङ्घटना विधीयते,कया दृष्टार्थानुपपत्त्या दृष्टः परिचितः प्रत्यक्षलक्ष्यो योऽर्थो देवदत्ते पीनत्वादिः तस्यानुपपत्त्या अघटमानतया अन्यथानुपपत्तेः । यथा पीनो देवदत्तो दिवा न भुङ्क्ते, पीनत्वस्यान्यथानुपपत्त्या रात्राववश्यं भुङ्क्त इत्यर्थ इत्यत्र, दृष्टं विना भोजनं पीनत्वं दुर्घटं, दिवा च न भुङ्क्तेऽतो रात्राववश्यमदृष्टं भोजनं ज्ञापयतीत्यर्थापत्तिः प्रमाणम् ।

अथाभावप्रमाणमाह—

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्ताऽवबोधार्थं तत्राभावप्रमाणता ॥७६॥

यत्र वस्तुरूपे, अभावादौ पदार्थे प्रमाणपञ्चकं पूर्वोक्तं न जायते, तत्राभावप्रमाणता ज्ञेयेति सम्बन्धः । किमर्थमित्याह—वस्तुसत्ताऽवबोधार्थम् । वस्तुनोऽभावरूपस्य मुण्डभूतलादेः सत्ता

घटाद्यभावसद्भावः तस्यावबोधः प्रामाणिकपथावतारणं तदर्थं तद्धेतोरित्यर्थः। ननु कथमभावस्य प्रामाण्यं, प्रत्यक्षं तावद्भूतलमेवेदं घटादि न भवतीत्यन्वयव्यतिरेकद्वारेण वस्तुपरिच्छेदः, तदधिकं विषयमभावैकरूपं निराचष्ट, इति किं विषयमाश्रित्याभावप्रामाण्यं स्यात्। मुण्डभूतले घटाभावमाश्रित्येति चेत्। मैवम्। घटाभावप्रतिबद्धभूतलग्रहणासिद्धेः। तदुक्तम्—

"न तावदिन्द्रियेणैषां नास्तीत्युत्पद्यते मतिः।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि॥
गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया" इति॥

नास्तिताज्ञानग्रहणावसरे प्रामाण्यमेवाभावस्य, केवलं भावांश इन्द्रियसन्निकर्षजत्वेन पञ्चप्रमाणागोचरसञ्चरिष्णुतामनुभवन्नाबालगोपालाङ्गनाप्रसिद्धं व्यवहारं प्रवर्त्तयति। अभावांशस्तु प्रमाणपञ्चकविषयबहिर्भूतत्वात्केवलभूतलग्रहणाद्युपयोगित्वादभावप्रमाणव्यपदेशमश्नुत इति सिद्धमभावस्यापि युक्तियुक्ततया प्रामाण्यमिति।

उपसंहरन्नाह—

जैमिनीयमतस्यापि संक्षेपोऽयं निवेदितः।
एवमास्तिकवादानां कृतं संक्षेपकीर्त्तनम्॥७७॥

अपिशब्दान्न केवलमपरदर्शनानां, जैमिनीयमतस्याप्ययं संक्षेपो निवेदितः कथितः। वक्तव्यस्य बाहुल्याट्टीकामात्रे सामस्त्यकथनायोगात् संक्षेप एव प्रोक्तोऽस्ति। अथ सूत्रकृत्सम्मतसंक्षेपमुक्त्वा निगमनमाह। एवमिति। एवमित्थम्, आस्तिकवादिनामिह परलोकगतिपुण्यपापास्तिक्यवादिनां बौद्धनैयायिक-

साङ्ख्यजैनवैशेषिकजैमिनीयानां संक्षेपकीर्त्तनं कृतं, संक्षेपेण वक्तव्यमभिहितमित्यर्थः ।

विशेषान्तरमाह—

नैयायिकमतादन्ये भेदं वैशेषिकैः सह ॥
न मन्यन्ते मते तेषां पञ्चैवास्तिकवादिनः ॥७८॥

अन्य आचार्या नैयायिकमताद्वैशेषिकैः सह भेदं न मन्यन्ते दर्शनाधिष्ठात्रेकदेवतत्वात् पृथग्दर्शनं नाभ्युपगच्छन्ति तेषां मतापेक्षयाऽऽस्तिकवादिनः पञ्चैव ।

दर्शनानां षट्सङ्ख्या जगति प्रसिद्धा कथं फलतीत्याह—

षष्ठदर्शनसङ्ख्या तु पूर्यते तन्मते किल ।
लोकायतमतक्षेपात्कथ्यते तेन तन्मतम् ॥७९॥

ये नैयायिकवैशेषिकयोरेकरूपत्वेनाभेदं मन्यमाना दर्शनपञ्चकमेवाचक्षते, तन्मते षष्ठदर्शनसङ्ख्या लोकायतमतक्षेपात्पूर्यते । तु पुनरर्थे, किलेति परमाप्ताम्नाये,तेन कारणेन तन्मतं चार्वाकमतं कथ्यते तत्स्वरूपमुच्यत इति ।

तदेवाह—

लोकायता वदन्त्येवं नास्ति देवो न निर्वृतिः ।
धर्माधर्मौ न विद्येते न फलं पुण्यपापयोः ॥८०॥

लोकायता नास्तिका, एवममुना प्रकारेण वदन्ति कथमित्याह–सर्वज्ञादिर्नास्ति, निर्वृतिर्मोक्षो नास्ति, अन्यच्च, न विद्येते, कौ धर्माधर्मौ, धर्मश्चाधर्मश्चेति द्वन्द्वः । पुण्यपापे न स्त इत्यर्थः । पुण्यपापयोर्धर्माधर्मयोः फलं स्वर्गनरकादिरूपं नेति नास्ति, तदपि पुण्यपापयोरभावे कौतस्त्यं तत्फलमित्यादि । तच्छास्त्रो-

क्तमेव सोल्लुण्ठं दर्शयन्नाह—तथा च तन्मतम् । तथा चेत्युपदर्शने । तन्मतं, प्रस्तावान्नास्तिकमतम् ।

कथमित्याह—

एतावानेव लोकोऽयं यावानिन्द्रियगोचरः ।
भद्रे ! वृकपदं पश्य यद्वदन्ति बहुश्रुताः ॥८१॥

अयं लोकः संसार एतावानेव एतावन्मात्र एव यावान् यावन्मात्रमिन्द्रियगोचरः। इन्द्रियं स्पर्शनरसनघ्राणचक्षुःश्रोत्रभेदात्पञ्चविधं तस्य गोचरो विषयः। पञ्चेन्द्रियव्यक्तीकृतमेव वस्त्वस्ति नापरं किं चन। अत्र लोकग्रहणाल्लोकस्थपदार्थसार्थस्य सङ्ग्रहः । तथा परे पुण्यपापसाध्यं स्वर्गनरकाद्याहुः,तदप्रमाणं प्रत्यक्षाभावा देव । अप्रत्यक्षमप्यस्तीति चेच्छशशृङ्गवन्ध्यास्तनन्धयादीनामपि भावोऽस्तु । तथा हि । स्पर्शनेन्द्रियेण तावन्मृदुकठोरशीतोष्णस्निग्धरूक्षादिभावा उपलभ्यन्ते । रसनेन्द्रियेण कटुकषायाम्लमधुरास्वादलेह्यचूष्यपेयादयो वेद्यन्ते । घ्राणेन्द्रियेण मृगमदमलयजघनसारागुरुप्रभृतिसुरभिवस्तुपरमलोद्गारपरम्पराः परिचीयन्ते । चक्षुरिन्द्रियेण भूभूधरपुरप्राकारघटपटस्तम्भाम्भोरुहादिमनुष्यपशुश्वापदादिस्थावरजङ्गमपदार्थसार्था अनुभूयन्ते । श्रोत्रेन्द्रियेण प्रथिष्ठगाथकपथपथिकप्रथ्यमानतालमानमूर्च्छनाप्रेङ्खोलनाखेलन्मधुरध्वनय आकर्ण्यन्ते। इति पञ्चप्रकारप्रत्यक्षदृष्टमेव वस्तुतत्त्वं प्रमाणपदवीमवगाहते। शेषप्रमाणानामनुभवाभावादेव निरस्तत्वाद्,गगनकुसुमवत्। ये चास्पृष्टमनास्वादितमनाघ्रातमदृष्टमश्रुतमप्याद्रियमाणाः स्वर्गमोक्षादिसुखपिपासाऽनुबन्धचेतोवृत्तयो दुश्चरतरतपश्चरणादिकष्टपिष्टकया स्वजन्म क्षपयन्ति, तन्महासाहसं तेषामिति । किं चाप्रत्यक्षमप्यस्तितयाऽभ्युपगम्यते

चेज्जगदनपन्हुतमेव स्याद्, दरिद्रो हि स्वर्णराशिर्मेऽस्तीत्यनुध्याय हेलयैव दौःस्थ्यं दलयेत्, दासोऽपि स्वचेतसि स्वामितामवलम्ब्य किङ्करतां निराकुर्यादिति,न कोऽपि स्वानभिमतमालिन्यमश्नुवीत। एवं न कश्चित्सेव्यसेवकभावो दरिद्रधनिभावो वा स्यात्। तथा च जगद्व्यवस्थाविलोपप्रसङ्ग इति सुस्थितमिन्द्रियगोचर एव प्रमाणम्। ये चानुमानागमादिप्रामाण्यमनुमन्वानाः पुण्य-पापव्यापारप्राप्यस्वर्गनरकादिसुखासुखं व्यवस्थापयन्तो वाचाटा न विरमन्ति, तान् प्रति दृष्टान्तमाह। भद्रे वृकपदं पश्येति। यथा हि कश्चित्पुरुषो वृकपददर्शनसमुद्भूतकुतूहलां दयितां मन्थरतरप्रसृमरसमीरणसमीकृतपांशुप्रकारस्वाङ्गुलिन्यासेन वृ-कपदाकारतां विधाय प्राह—हे भद्रे! वृकपदं पश्य। कोऽर्थः। यथा तस्या अविदितपरमार्थाया मुग्धाया विदग्धो वल्लभो वृकचरणनिरीक्षणाग्रहं कराङ्गुलिन्यासमात्रेण प्रलोभ्य पूरित-वान्, एवममी अपि धर्मच्छद्मधूर्त्ताः परवञ्चनप्रवणा यत् किं-चिदनुमानागमादिदार्ढ्यमादर्श्य व्यर्थं मुग्धजनान् स्वर्गादिप्राप्ति-लभ्यभोगाभोगप्रलोभनया भक्ष्याभक्ष्यगम्यागम्यहेयोपादेयादि-सङ्कटे पातयन्ति, मुग्धधार्मिकान्ध्यं चोत्पादयन्ति। एवमेवार्थं प्रमाणकोटिमधिरोपयन्तश्च यद्बहुश्रुताः परमार्थवेदिनो वदन्ति, वक्ष्यमाणपद्येनेत्यर्थः।

पिब खाद च जातशोभने! यदतीतं वरगात्रि! तन्न ते।
न हि भीरु! गतं निवर्त्तते समुदयमात्रमिदं कलेवरम् ८२

हे जातशोभने! भावप्रधानत्वान्निर्देशानां, जातं शोभनत्वं वदननयनादित्वं यस्याः सेति तत्सम्बोधनम्। पिब पेयापेयव्यव-स्थावैसंष्ठुल्येन मदिरादेः पानं कुरु न केवलं पिब, खाद च भ-क्ष्याभक्ष्यनिरपेक्षतया मांसादिकं भक्षय। यद्वा पिबेति अधरा-

दिपानं कुरु, खादेति भोगानुपभुङ्क्ष्वेति काम्युपदेशः, स्वयौवनं सफलीकुर्वित्यर्थः। अथ सुलभमेव पुण्यानुभावाद्भवान्तरेऽपि शोभनत्वमिति परोक्तमाशङ्क्याह—वरगात्रि प्रधानाङ्गि ! यदतीतम्, अतिक्रान्तं यौवनादि तत्ते तव भूयो न, किं तु जराजीर्णत्वमेव भविष्यतीत्यर्थः । जातशोभनेवरगात्रीतिसम्बोधनयोः समानार्थयोरप्यादरानुरागातिरेकान्न पौनरुक्त्यं दोषः। यदुक्तम्—

"अनुवादादरवीप्साभृशार्थविनियोगहेत्वसूयासु ।
ईषत्सम्भ्रमविस्मयगणनास्मरणेष्वपुनरुक्तम्" ॥

ननु स्वेच्छयाऽविच्छिन्ने खादने पाने दुस्तरा परलोके कष्टपरंपरा, सुलभं भवति सुकृतसञ्चये भवान्तरेऽपि यौवनादिकमिति पराशङ्कां दूषयन्नाह—न हि भीरु गतं निवर्तते । हे भीरु ! परोक्तमात्रेण नरकादिप्राप्यदुःखभयाकुले ! गतम्, इहभवातिक्रान्तं सुखयौवनादि न निवर्त्तते परलोके नाढौकते परलोकसुखाकाङ्क्षया तपश्चरणादिकष्टक्रियाभिरिहत्यसुखोपेक्षा व्यर्थेत्यर्थः। अथ जन्यजनकसम्बन्धसद्भावादमुना कायेन परलोकेऽपि सहेतुकं सुखदुःखादिकं वेदितव्यमवश्यमेवेति चेद्। आह । समुदयमात्रमिदं कलेवरम् ।इदं कलेवरं शरीरं समुदयमात्रं समुदयो मेलः वक्ष्यमाणचतुर्भूतानां संयोगस्तन्मात्रं मात्रशब्दोऽवधारणे भूतचतुष्टयसम्बन्ध एव कायो, न च पूर्वभवादिशुभाशुभकर्मविपाकवेद्यसुखदुःखादिसव्यपेक्ष इत्यर्थः। संयोगाश्च तरुशिखरावलीलीनशकुनिगणवत्, क्षणतो विनश्वरास्तस्मात् परलोकानपेक्षया यथेच्छं पिब, खाद चेति वृत्तार्थः ।

चैतन्यमाह—

किं च पृथ्वी जलं तेजो वायुर्भूतचतुष्टयम् ।
चैतन्यभूमिरेतेषां मानं त्वक्षजमेव हि ॥ ८३ ॥

किं चेत्युपदर्शने,पृथ्वी भूमिः,जलमापः, तेजो वन्हिः, वायुः पवन, इति भूतचतुष्टयं तेषां चार्वाकाणां चैतन्यभूमिः चैतन्योत्पत्तिकारणं चत्वार्यपि भूतानि संभूय सपिण्डं चैतन्यं जनयन्तीत्यर्थः । तु पुन,र्मानं प्रमाणं, हि निश्चितम्, अक्षजमेव प्रत्यक्षमेवैकं प्रमाणमित्यर्थः ।

ननु भूतचतुष्टयसंयोगजदेहचैतन्योत्पत्तिः कथं प्रतीयतामित्याशङ्क्याह—

पृथ्व्यादिभूतसंहत्यां तथा देहादिसम्भवः ।
मदशक्तिः सुराऽङ्गेभ्यो यद्वत्तद्वत्स्थिताऽऽत्मता ॥८४॥

पृथिव्यादीनि पृथिव्यप्तेजोवायुरूपाणि यानि भूतानि तेषां संहत्यां मेले संयोगे सति, तथेत्युपदर्शने, देहादिसम्भवः, आदिशब्दादितरे भूधरादिपदार्था अपि चतुष्टयसंयोगजाता एव ज्ञेयाः। दृष्टान्तमाह—यद्वद् येन प्रकारेण सुराऽङ्गेभ्यो गुडधातक्यादिभ्यो मद्याङ्गेभ्यो मदशक्तिरुन्मादकत्वं भवति, तद्वत्तथा भूतचतुष्टयसम्बन्धात् शरीर आत्मता स्थिता सचेतनत्वं जातमित्यर्थः ।

इति स्थिते यदुपदेशपूर्वकमुपसंहारमाह—

तस्माद् दृष्टपरित्यागाददृष्टे च प्रवर्तनम् ।
लोकस्य तद्विमूढत्वं चार्वाकाः प्रतिपेदिरे ॥८५॥

तस्मादिति पूर्वोक्तानुस्मारणे, पूर्वं तस्मात्तः कारणाद् दृष्टपरित्यागाद् दृष्टं पेयापेयखाद्याखाद्यगम्यागम्यानुरूपं प्रत्यक्षानुभाव्यं यत्सुखं, तस्य परित्यागाददृष्टे तपश्चरणादिकष्टक्रियासाध्यपरलोकसुखादौ प्रवर्तनं प्रवृत्तिः । चः समुच्चये । यत्तदोर्नैयत्यार्थाद्धे यत्सम्बन्धो ज्ञेयः। तल्लोकस्य विमूढत्वमज्ञानत्वं चार्वाकाः

लौकायतिकाः प्रतिपेदिरे प्रतिपन्नाः। मूढलोका हि विप्रतारकवचनोपन्यासभासितज्ञानाः सांसारिकं सुखं परित्यज्य व्यर्थं स्वर्गं मोक्षपिपासया तपोजपध्यानहोमादिभिरिहत्यं सुखं हस्तगतमुपेक्षन्त इति।

साध्यावृत्तिनिवृत्तिभ्यां या प्रीतिर्जायते जने।
निरर्था सा मते तेषां सा चाकाशात् परा न हि॥८६॥

साध्यस्य मनीषितस्य कस्य चिद्वस्तुन आवृत्तिः प्राप्तिः, कस्य चिद्वस्तुनोऽनभीष्टस्य निवृत्तिरभावः, ताभ्यां जने लोके या प्रीतिर्जायते उत्पद्यते सा तेषां चार्वाकाणां निरर्थिका निरभिप्राया शून्या मताऽभीष्टा। भवार्जितपुण्यपापसाध्यं सुखदुःखादिकं सर्वथा न विद्यत इत्यर्थः। सा च प्रीतिराकाशाद् गगनात् परा न हि यथाऽऽकाशं शून्यं तथैषाऽपि प्रीतिरभावरूपैवेत्यर्थः।

उपसंहारमाह—

लोकायतमतेऽप्येवं संक्षेपोऽयं निवेदितः।
अभिधेयतात्पर्यार्थः पर्यालोच्यः सुबुद्धिभिः॥८७॥

एवममुना प्रकारेण लोकायतमतेऽप्ययं संक्षेपो निवेदितः। अपिः समुच्चये। न केवलं परमते संक्षेप उक्तो लोकायतमतेऽपि। अथ सर्वदर्शनसम्मतसङ्ग्रहे परस्परकल्पितानल्पविकल्पजल्परूपे निरूपिते किंकर्त्तव्यमूढानां प्राणिनां कर्त्तव्योपदेशमाह—अभिधेयेति। सुबुद्धिभिः पण्डितैरभिधेयतात्पर्यार्थः पर्यालोच्यः। अभिधेयं कथनीयं मुख्यवृत्तया प्रतिपाद्यं यद्दर्शनस्वरूपं तस्य तात्पर्यार्थः सारार्थो विचारणीयः। सुबुद्धिभिरिति। शुद्धा पक्षपातरहिता बुद्धिर्येषामिति। न तु कदाग्रहग्रहिलैः। यदुक्तम्—

आग्रही बत निनीषति युक्तिं
तत्र यत्र मतिरस्य निविष्टा ।
पक्षपातरहितस्य हि तस्य
यत्र तत्र मतिरेति निवेशमिति ॥

दर्शनानां पर्यन्तैकसारूप्येऽपि पृथक् पृथगुपदेष्टव्याद्विमतिसम्भवे विमूढस्य प्राणिनः सर्वस्पृक्तया दुर्लभं स्वर्गापवर्गसाधकत्वम् अतो विमर्शनीयस्तात्त्विकोऽर्थः । यथा च विचारितं चिरंतनैः ।

श्रोतव्यः सौगतो धर्मः कर्त्तव्यः पुनरार्हतः ।
वैदिको व्यवहर्तव्यो ध्यातव्यः परमः शिवः ॥

इत्यादिविमृश्य श्रेयस्करं रहस्यमभ्युपगन्तव्यं कुशलमतिभिरिति पर्यन्तश्लोकार्थः ।

सप्ताशीतिः श्लोकसूत्रं, टीकामानं विनिश्चितम् ।
सहस्रमेकं द्विशती द्वापञ्चाशदनुष्टुभाम् ॥

इति श्रीहरिभद्रसूरिकृतषड्दर्शनसमुच्चये मणिभद्रकृता
लघुवृत्तिः समाप्ता ।

शम् ।



मूलमात्र—

# षड्दर्शनसमुच्चये

---

## ग्रन्थारम्भादि ।

सद्दर्शनं जिनं नत्वा वीरं स्याद्वाददेशकम् ।
सर्वदर्शनवाच्योऽर्थः संक्षेपेण निगद्यते ॥ १ ॥
दर्शनानि षडेवात्र मूलभेदव्यपेक्षया ।
देवतातत्त्वभेदेन ज्ञातव्यानि मनीषिभिः ॥ २ ॥

## षड्दर्शनोद्देशः ।

बौद्धं नैयायिकं सांख्यं जैनं वैशेषिकं तथा ।
जैमिनीयं च नामानि दर्शनानाममून्यहो ॥ ३ ॥

## बौद्धमतम् ।

तत्र बौद्धमते तावद्देवता सुगतः किल ।
चतुर्णामार्यसत्यानां दुःखादीनां प्ररूपकः ॥ ४ ॥
दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः ।
विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥ ५ ॥
समुदेति यतो लोके रागादीनां गणोऽखिलः ।
आत्मात्मीयस्वभावाख्यः समुदयः स संमतः ॥६॥

क्षणिकाः सर्वसंस्कारा इत्येवं वासना तु या ।
स मार्ग इति विज्ञेयो, निरोधो मोक्ष उच्यते ॥७॥
पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।
धर्मायतनमेतानि द्वादशायतनानि च ॥ ८ ॥
प्रमाणे द्वे च विज्ञेये तथा सौगतदर्शने ।
प्रत्यक्षमनुमानं च सम्यग्ज्ञानं द्विधा यतः ॥९॥
प्रत्यक्षं कल्पनाऽपोढमभ्रान्तं तत्र बुध्यताम् ।
त्रिरूपाल्लिङ्गतो लिङ्गिज्ञानं त्वनुमानसंज्ञितम् ॥१०॥
रूपाणि पक्षधर्मत्वं सपक्षे विद्यमानता ।
विपक्षे नास्तिता हेतोरेवं त्रीणि विभाव्यन्ताम् ॥११॥
बौद्धराद्धान्तवाच्यस्य संक्षेपोऽयं निवेदितः, ।

## नैयायिकमतम् ।

नैयायिकमतस्येतः कथ्यमानो निशम्यताम् ॥१२॥
आक्षपादमते देवः सृष्टिसंहारकृच्छिवः ।
विभुर्नित्यैकसर्वज्ञो नित्यबुद्धिसमाश्रयः ॥ १३ ॥
तत्त्वानि षोडशामुत्र प्रमाणादीनि तद्यथा ।
प्रमाणं च प्रमेयं च संशयश्च प्रयोजनम् ॥ १४ ॥
दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवास्तर्कनिर्णयौ ।
वादो जल्पो वितण्डा च हेत्वाभासाश्छलानि च॥१५॥
जातयो निग्रहस्थानान्येषामेवं प्ररूपणा, ।

अर्थोपलब्धिहेतुः स्यात्प्रमाणं तच्चतुर्विधम् ॥१६॥
प्रत्यक्षमनुमानं चोपमानं शाब्दिकं तथा, ।
तत्रेन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारिकम् ॥ १७ ॥
व्यवसायात्मकं ज्ञानं व्यपदेशविवर्जितम् ।
प्रत्यक्ष,मितरन्मानन्तत्पूर्वं त्रिविधं भवेत् ॥ १८ ॥
पूर्ववच्छेषवच्चैव दृष्टं सामान्यतस्तथा ।
तत्राद्यं कारणात्कार्यमनुमानमिह गीयते ॥ १९ ॥
रोलम्बगवलव्यालतमालमलिनत्विषः ।
वृष्टिं व्यभिचरन्तीह नैवंप्रायाः पयोमुचः ॥२०॥
कार्यात्कारणानुमानं यच्च तच्छेषवन्मतम् ।
तथाविधनदीपूरान्मेघो वृष्टो यथोपरि ॥ २१ ॥
यच्च सामान्यतो दृष्टं तदेवं गतिपर्विका ।
पुंसि देशान्तरप्राप्तिर्यथा सूर्येऽपि सा तथा ॥ २२ ॥
प्रसिद्धवस्तुसाधर्म्यादप्रसिद्धस्य साधनम् ।
उपमानं समाख्यातं यथा गौर्गवयस्तथा ॥ २३ ॥
शाब्दमाप्तोपदेशस्तु मानमेवं चतुर्विधम्, ।
प्रमेयं चात्मदेहार्थबुद्धीन्द्रियसुखादि च ॥ २४ ॥
किमेतदिति सन्दिग्धः प्रत्ययः संशयो मतः ।
प्रवर्तते यदर्थित्वात्तत्तु साध्यं प्रयोजनम् ॥२५॥
दृष्टान्तस्तु भवेदेष विवादविषयो न यः, ।

सिद्धान्तस्तु चतुर्भेदः सर्वतन्त्रादिभेदतः ॥२६॥
प्रतिज्ञाहेतुदृष्टान्तोपनया निगमस्तथा ।
अवयवाः पञ्च तर्कः संशयोपरमो भवेत् ॥२७॥
यथा काकादिसंपातात् स्थाणुना भाव्यमत्र हि, ।
ऊर्ध्वं संदेहतर्काभ्या प्रत्ययो निर्णयो मतः ॥२८॥
आचार्यशिष्ययोः पक्षप्रतिपक्षपरिग्रहात् ।
यः कथाऽभ्यासहेतुः स्यादसौ वाद उदाहृतः॥२९॥
विजिगीषुकथा या तुच्छलजात्यादिदूषणम् ।
स जल्पः, सा वितण्डा तु या प्रतिपक्षवर्जिता॥३०॥
हेत्वाभासा असिद्धाद्या,श्छलं कूपो नवोदकः ।
जातयो दूषणाभासाः पक्षादिर्दूष्यते न यैः ॥३१॥
निग्रहस्थानमाख्यातं परो येन निगृह्यते ।
प्रतिज्ञाहानिसंन्यासविरोधादिविभेदवत् ॥ ३२ ॥
नैयायिकमतस्यैवं समासः कथितोऽधुना ।

## सांख्यमतम् ।

सांख्याभिमतभावानामिदानीमयमुच्यते ॥ ३३ ॥
एतेषां या समावस्था सा प्रकृतिः किलोच्यते ।
प्रधानाव्यक्तशब्दाभ्यां वाच्या नित्यस्वरूपिका॥३४॥
सांख्या निरीश्वराः केचित्के चिदीश्वरदेवताः ।
सर्वेषामपि तेसां स्यात्तत्त्वानां पञ्चविंशतिः ॥३५॥

सत्त्वं रजस्तमश्चेति ज्ञेयं तावद् गुणत्रयम् ।
प्रसादतोषदैन्यादिकार्यलिङ्गं क्रमेण तत् ॥ ३६ ॥
ततः संजायते बुद्धिर्महानिति यकोच्यते ।
अहंकारस्ततोऽपि स्यात्तस्मात्षोडशको गणः ॥ ३७ ॥
स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रं च पञ्चमम् ।
पञ्च बुद्धीन्द्रियाण्याहुस्तथा कर्मेन्द्रियाणि च ॥ ३८ ॥
पायूपस्थवचःपाणिपादाख्यानि मनस्तथा ।
अन्यानि पञ्चरूपाणि तन्मात्राणीति षोडश ॥ ३९ ॥
रूपात्तेजो रसादापो गन्धाद्भूमिः स्वरान्नभः ।
स्पर्शाद्वायुस्तथैवं च पञ्चभ्यो भूतपञ्चकम् ॥ ४० ॥
एवं चतुर्विंशतितत्त्वरूपं निवेदितं सांख्यमते प्रधानम् ।
अन्यस्त्वकर्ता विगुणस्तु भोक्ता, तत्त्वं पुमान्नित्यचिदभ्युपेतः ४१
पञ्चविंशतिस्तत्त्वानि सांख्यस्यैव भवन्ति च ।
प्रधाननरयोश्चात्र वृत्तिः पङ्ग्वन्धयोरिव ॥ ४२ ॥
प्रकृतिवियोगो मोक्षः पुरुषस्यैवान्तरज्ञानात् ।
मानत्रितयं च भवेत् प्रत्यक्षं लैङ्गिकं शाब्दम् ॥ ४३ ॥
एवं सांख्यमतस्यापि समासः कथितोऽधुना ।

## जैनमतम् ।

जैनदर्शनसंक्षेपः कथ्यते सुविचारवान् ॥ ४४ ॥
जिनेन्द्रो देवता तत्र रागद्वेषविवर्जितः ।

हतमोहमहामल्लः केवलज्ञानदर्शनः ॥ ४५ ॥
सुरासुरेन्द्रसंपूज्यः सद्भूतार्थोपदेशकः ।
कृत्स्नकर्मक्षयं कृत्वा संप्राप्तः परमं पदम् ॥४६॥
जीवाजीवौ तथा पुण्यं पापमाश्रवसंवरौ ।
बन्धश्च निर्जरामोक्षौ नव तत्त्वानि तन्मते ॥४७॥
तत्र ज्ञानादिधर्मेभ्यो भिन्नाभिन्नो विवृत्तिमान् ।
कर्त्ता शुभाशुभं कर्म भोक्ता कर्मफलस्य च ॥४८॥
चैतन्यलक्षणो जीवो, यश्चैतद्वैपरीत्यवान् ।
अजीवः स समाख्यातः, पुण्यं सत्कर्मपुद्गलाः ॥४९॥
पापं तद्विपरीतन्तु मिथ्यात्वाद्यास्तु हेतवः ।
यस्तैर्बन्धः स विज्ञेय आश्रवो जिनशासने ॥५०॥
संवरस्तान्निराधस्तु बन्धो जीवस्य कर्मणः ।
अन्योन्यानुगमात्कर्मसम्बन्धो यो द्वयोरपि ॥५१॥
बद्धस्य कर्मणः शाटो यस्तु सा निर्जरा मता ।
आत्यन्तिको वियोगस्तु देहादेर्मोक्ष उच्यते ॥५२॥
एतानि तत्र तत्त्वानि यः श्रद्धत्ते स्थिराशयः ।
सम्यक्त्वज्ञानयोगेन तस्य चारित्रयोग्यता ॥५३॥
तथा भव्यत्वपाकेन यस्यैतत्त्रितयं भवेत् ।
सम्यग्ज्ञानक्रियायोगाज्जायते मोक्षभाजनम् ॥५४॥
प्रत्यक्षं च परोक्षं च द्वे प्रमाणे तथा मते ।

अनन्तधर्मकं वस्तु प्रमाणविषयस्त्विह ॥ ५५ ॥
अपरोक्षतयाऽर्थस्य ग्राहकं ज्ञानमीदृशम् ।
प्रत्यक्ष,मितरज् ज्ञेयं परोक्षं ग्रहणेक्षया ॥ ५६ ॥
येनोत्पादव्ययध्रौव्ययुक्तं यत्सत्तदिष्यते ।
अनन्तधर्मकं वस्तु तेनोक्तं मानगोचरः ॥ ५७ ॥
जैनदर्शनसंक्षेप इत्येष कथितोऽनघः ।
पूर्वापरविघातस्तु यत्र क्वापि न विद्यते ॥ ५८ ॥
देवताविषये भेदो नास्ति नैयायिकैः समम् ।
वैशेषिकाणां तत्त्वेषु विद्यतेऽसौ निर्दिश्यते ॥५९॥

**काणाददर्शनम् ।**

द्रव्यं गुणस्तथा कर्म सामान्यं च चतुर्थकम् ।
विशेषसमवायौ च तत्त्वषट्कं हि तन्मते ॥६०॥
तत्र द्रव्यं नवधा भूजलतेजोऽनिलान्तरिक्षाणि ।
कालदिगात्ममनांसि गुणाः पुनश्चतुर्विंशतिधा॥६१॥
स्पर्शरसरूपगन्धाः शब्दः सङ्ख्या विभागसंयोगौ ।
परिमाणं च पृथक्त्वं तथा परत्वापरत्वे च ॥६२॥
बुद्धिः सुखदुःखेच्छा धर्माधर्मौ प्रयत्नसंस्कारौ ।
द्वेषः स्नेहगुरुत्वे द्रवत्ववेगौ गुणा एते ॥ ६३ ॥
उत्क्षेपावक्षेपावाकुञ्चनकं प्रसारणं गमनम् ।
पञ्चविधं कर्मैत,त्परापरे द्वे तु सामान्ये ॥ ६४ ॥

तत्र परं सत्ताऽऽख्यं द्रव्यत्वाद्यपर,मथ विशेषस्तु ।
निश्चयतो नित्यद्रव्यवृत्तिरन्यो विनिर्दिशेत् ॥६५॥
य इहायुतसिद्धानामाधाराधेयभूतभावानाम् ।
सम्बन्ध इह प्रत्ययहेतुः प्रोक्तः स समवायः ॥६६॥
प्रमाणं च द्विधाऽमीषां प्रत्यक्षं लैङ्गिकं तथा ।
वैशेषिकमतस्यैवं संक्षेपःपरिकीर्त्तितः ॥ ६७ ॥

### जैमिनिमतम् ।

जैमिनीयाः पुनः प्राहुः सर्वज्ञादिविशेषणः ।
देवो न विद्यते कोऽपि यस्य मानं वचो भवेत्॥६८॥
तस्मादतीन्द्रियार्थानां साक्षाद् द्रष्टुरभावतः ।
नित्येभ्यो वेदवाक्येभ्यो यथाऽर्थत्वविनिश्चयः ॥६९॥
अत एव पुरा कार्यो वेदपाठः प्रयत्नतः ।
ततो धर्मस्य जिज्ञासा कर्त्तव्या धर्मसाधनी ॥७०॥
नोदनालक्षणो धर्मो, नादनो तु क्रियां प्रति ।
प्रवर्त्तकं वचः, प्राहुः स्वःकामोऽग्निं यजेद्यथा॥७१॥
प्रत्यक्षमनुमानं च शब्दश्चोपमया सह ।
अर्थापत्तिरभावश्च षट् प्रमाणानि जैमिनेः ॥७२॥
तत्र प्रत्यक्षमक्षाणां संप्रयोगे सतां मतिः ।
आत्मनो बुद्धिजन्मेत्यनुमानं लैङ्गिकं पुनः ॥७३॥
शाब्दं शाश्वतवेदोत्थ,मुपमानं प्रकीर्त्तितम् ।

प्रसिद्धार्थस्य साधर्म्यादप्रसिद्धस्य भाजनम् ॥७४॥
दृष्टार्थानुपपत्त्या तु कस्याप्यर्थस्य कल्पना ।
क्रियते यद्बलेनासावर्थापत्तिरुदाहृता ॥ ७५ ॥
प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्ताऽवबोधार्थं तत्राभावप्रमाणता ॥ ७६ ॥
जैमिनीयमतस्यापि संक्षेपोऽयं निवेदितः ।
एवमास्तिकवादानां कृतं संक्षेपकीर्त्तनम् ॥ ७७ ॥
नैयायिकमतादन्ये भेदं वैशेषिकैः सह ।
न मन्यन्ते मते तेषां पञ्चैवास्तिकवादिनः ॥७८॥
षष्ठदर्शनसङ्ख्या तु पूर्यते तन्मते किल ।
लोकायतमतक्षेपात्कथ्यते तेन तन्मतम् ॥ ७९ ॥

## चार्वाकमतम् ।

लोकायता वदन्त्येवं नास्ति देवो न निर्वृतिः ।
धर्माधर्मौ न विद्येते न फलं पुण्यपापयोः ॥ ८० ॥
एतावानेव लोकोऽयं यावानिन्द्रियगोचरः ।
भद्रे ! वृकपदं पश्य यद्वदन्ति बहुश्रुताः ॥ ८१ ॥
पिब खाद च जातशोभने ! यदतीतं वरगात्रि ! तन्न ते ।
न हि भीरु ! गतं निवर्त्तते समुदयमात्रमिदं कलेवरम् ८२
किं च पृथ्वी जलं तेजो वायुर्भूतचतुष्टयम् ।
चैतन्यभूमिरेतेषां मानं त्वक्षजमेव हि ॥ ८३ ॥

पृथ्व्यादिभूतसंहत्यां तथा देहादिसम्भवः ।
मदशक्तिः सुराऽङ्गेभ्यो यद्वत्तद्वत्स्थताऽऽत्मता॥ ८४॥
तस्माद् दृष्टपरित्यागाददृष्टे च प्रवर्तनम् ।
लोकस्य तद्विमूढत्वं चार्वाकाः प्रतिपेदिरे ॥८५॥
साध्यावृत्तिनिवृत्तिभ्यां या प्रीतिर्जायते जने ।
निरर्था सा मता तेषां सा चाकाशात् परा न हि॥८६॥
लोकायतमतेऽप्येवं संक्षेपोऽयं निवेदितः ।
अभिधेयतात्पर्यार्थः पर्यालोच्यः सुबुद्धिभिः ॥८७॥

इति षड्दर्शनसमुच्चयः ।



प्राकृतसंस्करणात्मकं

# षड्दर्शनसमुच्चयपरिशिष्टम् ।

———ooo———

पृ० ३ प० ३

भट्ठेण[1] चरित्ताउ दंसणमिह दिढयरं गहेयव्वं ।
सिज्झंति चरणरहिया दंसणरहिया न सिज्झंति ॥
भ्रष्टेन चरित्राद् दर्शनमिह दृढतरं ग्रहीतव्यम् ।
सिध्यन्ति चरणरहिता दर्शनरहिता न सिध्यन्ति ॥

पृ० ३ प० १९

असियसयं किरियाणं अकिरियवाईण हुंति चुलसीई ।
अन्नाणिय सत्तट्ठी वेणइआणं च वत्तीसं ॥
अशीतिशतं क्रियाणामक्रियावादिनो भवन्ति चतुरशीतिः ।
आत्मवादिनः सप्तषष्टिर्विनयवादिनां च द्वात्रिंशत् ॥

पृ० ४ प० १

को दुःक्खं पाविज्जा कस्स न सुक्खेहिं विम्हहो हुज्जा ।
कोअ न लभेज्ज मुक्खं रागदोसा जइ न हुज्जा ॥
को दुःखं प्राप्नुयात्कस्य न सौख्यैर्विस्मियो भवेत् ।
कश्च न लभेत मोक्षं रागद्वेषौ यदि न भवेताम् ॥

पृ० ४७ प० १६

दोहिंवि णएहिं पणीयं सत्थमुलूगेण तहवि मिच्छत्तं ।
जं सविसयप्पहाणत्तणेण अण्णोणणिरवेक्खं ॥

---

१ अत्र "भट्ठेणे"त्येव सुपाठः । "सद्धेणे"ति तु मूलेऽसंगतः ।

द्वाभ्यामपि नयाभ्यां प्रणीतं शास्त्रमुलूकेन तथाऽपि मिथ्यात्वम् ।
यत्सविषयप्रधानत्वेनान्योन्यनिरपेक्षम् ॥

पृ० ४८ प० ६

जो एगं जाणइ सो सव्वं जाणइ
जो सव्वं जाणइ सो एगं जाणइ ।
य एकं जानाति स सर्वं जानाति
यः सर्वं जानाति स एकं जानाति ।

पृ० ४९ प० २१

सव्वजीवाणं पियणं अक्खरस्स अणन्तओ भागो निच्चुग्घाडिओ ।
जइ सोवि आवरेज्झा ता जीवो अजीवत्तं पाविज्झा ।
सुद्धावि मेहसमुदये होइ पहा चन्दसूराणम् ॥
सर्वजीवानामपि चाक्षरस्यानन्तको भागो नित्योद्घाटितः ।
यदि सोऽप्याव्रियेत तर्हि जीवोऽजीवत्वं प्राप्नुयात् ।
शुद्धाऽपि मेघसमुदये भवति प्रभा चन्द्रसूर्ययोः ॥

पृ० ९० प० १०

जीवाणं भन्त ! किं अत्तकडे दुक्खे, परकडे दुक्खे, तदुभयकडे दुक्खे ।
गोयम ! अत्तकडे दुक्खे, नो परकडे दुक्खे, नो तदुभयकडे दुक्खे इति ॥
जीवानां भदन्त ! किमात्मकृतं दुःखं परकृतं दुःखं तदुभयकृतं दुःखम् ।

गोतम ! आत्मकृतं दुःखं, नो परकृतं दुःखं, नो तदुभयकृतं-
दुःखम् ॥

पृ० ९१ प० १

नरतिरिसुराउउच्चं सायं परघाय आयवुज्जोयं ।
तित्थुस्सासनिमाणं पणिंदिवइरुस्सभचउरंसं ॥
तसदसचउवन्नाई सुरमणुदुगपंचतणु उवंगतिअं ।
अगुरुलहु पड मखगई बायालीसं सुहपयडी ॥

नरतिर्यक्सुरायुरुच्चं सातं पराघातातपोद्योतम् ।
तीर्थोच्छ्वासनिर्माणं पञ्चेन्द्रियवज्रर्षभचतुरस्रम् ॥
त्रसदशकं वर्णचतुष्कं सुरमनुजद्विकं तनुपञ्चकमुपाङ्गत्रिकम् ॥
अगुरुलघुप्रथमखगतिर्द्वाचत्वारिंशत् शुभप्रकृतयः ॥

पृ० ९१ प० १३

थावरदस चउजाई अपढमसंठाण खगइसंघयणा ।
तिरिनिरयदुगाउजाई वन्नचऊनाम चउतीसा ॥
नरयाउनीयअस्सायघाइपणयालसहियबासीई ।

स्थावरदशकं जातिचतुष्कमप्रथमसंस्थानखगतिसंहननानि ॥
तिर्यग्निरयद्विकायुर्जातिवर्णचतुष्कं नाम चत्वारिंशत् ॥
नरकायुर्नीचासाघातिपञ्चचत्वारिंशत्सहितद्व्यशीतिः ।

पृ० ९२ प० ९

समिइगुत्तिपरीसहजइधम्मभावचरित्ताणि ।
पणतिगदुवीसदसबारपञ्चभेएहिं सगवन्ना ॥

समितिगुप्तिपरीषहयतिधर्मभावनाचारित्राणि ।
पञ्चत्रिद्वाविंशतिदशद्वादशपञ्चभेदैः सप्तपञ्चाशत् ॥

पृ० ६२ पं० २३

संतपयपरूवणया दव्वमाणं च खित्तफसणा य ।
कालो य अन्तरं भागो भावो अप्पा बहुं चेव ॥
सत्पदप्ररूपणता द्रव्यप्रमाणं च क्षेत्रस्पर्शना च ।
कालश्चान्तरं भागो भावोऽल्पबहुत्वं च ॥

पृ० ६८ पं० ९

सुबहुंपि सुयमहीयं किं काही चरणविप्पमुक्कस्स ।
अन्धस्स जह पलित्ता दीवसयसहस्सकोडीवि ॥
नाणं चरित्तहीणं लिंगग्गहणं च दंसणविहीणं ।
संजमहीणं च तवं जो चरइ निरत्थयं तस्स ॥
सुबह्वपि श्रुतमधीतं किं करिष्यति चरणविप्रयुक्तस्य ।
अन्धस्य यथा प्रदीपा दीपशतसहस्रकोटिरपि ।
ज्ञानं चरित्रहीनं लिङ्गग्रहणं च दर्शनविहीनम् ।
संयमहीनं च तपः यश्चरति निरर्थकं तस्य ॥

इति ।

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 97.

# शुद्धाद्वैतमार्तण्डः ।

गोस्वामिश्रीश्रीगिरिधरजीमहाराजविरचितः ।

श्रीरामकृष्णभट्टविरचितप्रकाशाख्यव्याख्यासंवलितः ।

---

प्रमेयरत्नार्णवः ।

श्रीबालकृष्णभट्टविरचितः ।

श्रीमदाचार्यश्रीवल्लभाधीश्वर शुद्धाद्वैतसंप्रदायविदुषा

रत्नगोपालभट्टेन परिशोधितः ।

# ŚUDDHÂDVAITAMÂRTANDA,

BY GOSWÂMÎ ŚRÎ GIRIDHARÂJEE MÂHÂRÂJ,

With a Commentarycalled Prakâśa.

BY Sri Ramakrishna Bhatta.

*And PRAMEYARATNARṄAVA*

BY ŚRÎ BÂLAKRISHṆA BHAṬṬA.

EDITED BY

*Ratna Gopal Bhaṭṭa.*

---

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPOT:

BENARES.

AGENTS:—OTTO HARRASSOWITZ LEIPZIG:

PANDIT JYESHṬHÂRÂMA MUKUNDJÎ, BOMBAY.

*Printed by Harî Dâs Gupta, Proprietor,*

AT THE VIDYÂ-VILÂSA PRESS,

BENARES.

---

*Price Rupee One.*

1906

श्रीहरिः ।

---

अथैष किल परिशोध्य प्रकाशितो वरीवर्ति श्रीमदाचार्यवर्य-श्रीवल्लभाधीश्वरशुद्धाद्वैतसिद्धान्तप्रकाशकः सप्रकाशाख्यव्याख्यः शुद्धाद्वैतमार्तण्डग्रन्थः। तत्साहित्येन संमुद्रितो, नाम्नैवाभिव्यक्तप्रतिपाद्यस्तत्सिद्धान्तानुसारी प्रमेयरत्नार्णवनिबन्धश्च ।

तत्र, शुद्धाद्वैतमार्तण्डः, श्रीश्रीवल्लभाचार्यात्मजगोस्वामिश्रीश्रीविठ्ठलनाथदीक्षिततनूजनुःश्रीमहाराजगोस्वामिश्रीयदुनाथजीवंशावतंसषष्ठगृहतिलकितकाशीवास्तव्यगोस्वामिश्रीगिरिधरजीमहाराज-विरचितः ।

तद्व्याख्या च तच्चरणारुणाब्जचञ्चरीकचेतोभिः श्रीरामकृष्ण-भट्टैः कृता ।

तथा, प्रमेयरत्नार्णवस्तु गोकुलस्थश्रीबालकृष्णभट्टैः कृतः ।

एतद्द्वयं च मधुवनदासद्वारकादासकोठीसमध्यक्ष—श्रीकृष्ण भगवच्चरणभक्तिशास्त्ररसिकश्रीबालकृष्णदास—श्रीयुतश्यामदास-संगृहीतं पुस्तकद्वयं समवलम्ब्य प्रकाशितवानस्मि ।

अत्र संमुद्रणे नानाविधदर्शनप्रकाशनपरायणश्रीहरिदासगुप्ताऽभिधमहाशयसमुत्साहितो यथामति संशोधितवानस्मि ग्रन्थरत्नद्वयम् । तथापि मानवापरिहार्येण मतिदृष्टिदोषेण जातानि स्खलितानि नानुलक्ष्यीकृत्य सुधीभिर्ग्राह्यस्तत्त्वभाग इत्यलं विस्तरतः ।

सत्पक्षपातिनो हंसा नूनं नालीकवल्लभाः ।<br>गुणं गृह्णीत मा दोषं नीरक्षीरविवेकिनः ॥

प्रकाशको,

रत्नगोपालभट्टः ।

श्रीकृष्णाय नमः ।

# शुद्धाऽद्वैतमार्तण्डः ।

## गोस्वामिश्रीश्रीगिरिधरजीमहाराजविरचितः ।

### श्रीरामकृष्णभट्टप्रणीतप्रकाशाख्यव्याख्यासहितः ।

---

श्रीमदाचार्यचरणौ श्रीविठ्ठलपदाम्बुजे ।
श्रीमतां यदुनाथानां श्रीमद्गिरिधरः सुधीः ॥ १ ॥
चरणाम्बुजकिञ्जल्कपरागान् प्रणिपत्य तम् ।
शुद्धाऽद्वैतविचारार्कं तनुते सुधियां मुदे ॥ २ ॥

श्रीमन्मुकुन्दरायाख्यश्रीमद्गोपाललालयोः ।
अङ्घ्री श्रीवल्लभाचार्यश्रीविठ्ठलपदाम्बुजे ॥ १ ॥
श्रीमतां यदुनाथानां तदीयाऽन्वयशोभिनाम् ।
श्रीमद्गिरिधराख्यानां पादपद्मे प्रणम्य हि ॥ २ ॥
शुद्धाऽद्वैतविचारे ये तैः श्लोकाः समुदाहृताः ।
तदाज्ञया तान् विशदीकरवाणि यथामति ॥ ३ ॥

तत्र मङ्गलमाचरन्तो यथार्थसिद्धान्तबोधकचरणान्नमन्ति । श्रीमदाचार्यचरणावित्यादि * श्रीमदाचार्याणां पुरुषोत्तमास्यत्वेन श्रुतीनां वाग्रूपत्वेन तत्कृपया तदर्थस्फूर्त्यर्थं नमनमिति भावः । भवत्पदाम्भोरुहनावमत्र ते निधाय याताःसदनुग्रहो भवानिति वाक्याच्चरणयोरुद्धारकत्वात् स्वस्याप्युद्धार आभ्यामेवेति भावः । विदा ज्ञानेन ठान् शून्यान् लाति स्वदासत्वेनाङ्गीकरोति स विठ्ठलः। एतेन पूर्णकरुणामयत्वं सूचितम् । पदाम्बुजत्वोक्त्या भक्तिप्रवर्त्तकत्वं, भक्तिमतां सन्तापहारकत्वं, भक्तरूपमधुपसेवितत्वं च ध्वनितम् । प्रेमपूरभरितमानसेषु प्रादुर्भावो भवतीत्यपि ध्वन्यते । यदोः पुष्टिभक्तत्वेन तन्नाथत्वात् पुष्टिभक्तानामिष्टफलदातृत्वं सूचितम् ।

श्रीमद्गिरिधरचरणाः श्रीप्रभुचरणतनयश्रीयदुनाथवंशोद्भवा अस्मदाराध्यचरणाः ॥ १ ॥

चरणाम्बुजेत्यादि * परागसम्बन्धेन मनोमुकुरनिर्मलतया सर्वसिद्धान्तप्रतिफलनं ध्वन्यते । प्रणिपातः साष्टाङ्गप्रणामः । 'तद्विद्धि प्रणिपातेन परिप्रश्नानुसेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन' इति श्रीभगवदुक्तेः । तनुते विस्तारयति । एतेन स्वकल्पितत्वमपास्तम् । सुधीत्वं च भगवदेकशरणत्वम् । तेषां सिद्धान्तावलोकनेनानन्दो भविष्यतीत्यर्थः ॥ २ ॥

एवं प्रतिज्ञायाऽद्वैतज्ञानस्य द्वैतज्ञानसापेक्षत्वेन द्वैतपदार्थमाहुः ।

द्विधाज्ञानं तु यद्यत् स्यान्नामरूपात्मना मुहुः ।
ईशजीवात्मना वापि कार्यकारणतोऽथवा ॥ ३ ॥
द्वीतं तदेव द्वैतं स्याददद्वैतं तु ततोऽन्यथा ।
सर्वं खल्विदं ब्रह्म तज्जलानिति पठ्यते ॥ ४ ॥

द्विधाज्ञानं त्वित्यादि * द्विप्रकारकं ज्ञानमित्यर्थः । नामरूपे व्याकरवाणीति श्रुत्या नामरूपव्यवहारस्य भगवत्कृतत्वेन भगवद्रूपत्वम् । एतेन 'अस्ति भाति प्रियं रूपं नाम चेत्यर्थपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं मायारूपं ततः परम्' इति नामरूपयोर्मायिकत्वमिति निरस्तम् । केचित्त्वत्र जगद्रूपं ततः परमिति पठन्ति । तत्र नामरूपयोर्जगत्पद्रूत्वेन जगतः कार्यत्वात् कार्यकारणयोरभेदाम्नातिप्रतिकूलम् । यथा मृद्धटयोः । अत एव, नामरूपविभेदेन जगत् क्रीडति यो यतः इति श्रीमदाचार्यचरणैरुक्तम् । यदि च सधर्मत्वभिया तयोर्मायिकत्वमुच्यते तर्हि अस्तित्वादिनापि सविशेषत्वापत्तेः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । एष ह्येवानन्दयातीत्यादिश्रुतिभिः स्वतः प्रकाशकत्वं सर्वावभासकत्वं सर्वानन्ददातृत्वं यथोक्तं तथा, नामरूपे इतिश्रुत्या नामरूपप्रकाशकत्वमतो न तयोर्मायिकत्वमिति दिक् । नामरूपभेदज्ञानमेवाविद्यकं, न तु ते । एवमीशजीवभेदज्ञानं, तथा कार्यकारणभेदज्ञानमिति ॥ ३ ॥

द्वीतमिति * । ये गत्यर्थकास्ते ज्ञानार्थका इति न्यायेन गत्यर्थकादिण्धातोर्भावे क्ते इतमिति सिद्धौ द्विधा इतं द्वीतं तस्मात्

स्वार्थेऽणि द्वैतमिति निष्पन्नम् । तस्य च द्विप्रकारकं ज्ञानमित्यर्थः । *अन्यथा* भेदज्ञानाभावे । न द्वैतमद्वैतमिति विग्रहः । ननु कया श्रुत्याऽभेद उक्त इति तत्राहुः । *सर्वमित्यादि* छान्दोग्ये शाण्डिल्यविद्यायां पञ्चमे प्रपाठके पठितमस्ति, तज्जलानित्यस्याग्रे, शान्त उपासीतेति । अर्थस्तु जायते लीयते अनितीति जलान् तस्मिन् जलान् तज्जलान् । इदं सर्वं विश्वं खलु उत्पत्तिस्थितिलयावस्थासु तस्मिन्नतः सर्वं ब्रह्मेत्युपासीतेति ॥ ४ ॥

श्रुत्यर्थमाहुः ।

सर्वं ब्रह्मात्मकं विश्वमिदमा बोध्यते पुरः ।
सर्वशब्देन यावद्धि दृष्टश्रुतमदो जगत् ॥ ५ ॥
बोध्यते तेन सर्वं हि ब्रह्मरूपं सनातनम् ।
कार्यस्य ब्रह्मरूपस्य ब्रह्मैव स्याच्च कारणम् ॥ ६ ॥

सर्वमित्यादि* । *इदमेति* इदंशब्दस्य प्रत्यक्षवाचित्वात् ॥५॥

सनातनमिति * सदा वर्त्तमानं नित्यमिति यावत् । सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाना इति, कथमसतः सज्जायेत, तत्सत्यं, यदिदं किञ्च तत्सत्यमित्याचक्षत इत्यादिश्रुतेः । असत्यत्वेन ज्ञानं त्वासुराणामेव । तथाच गीतायाम्, असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमिति । ननु जगतो नित्यत्वे द्वैतापत्तिरित्याशङ्कायामाहुः *कार्यस्येति* विश्वस्य नित्यत्वेपि मृद्घटयोरिव कार्यकारणयोरैक्यान्न द्वैतापत्तिरिति भावः । सर्वं खल्विदं ब्रह्मेत्यादिना बोधितब्रह्मरूपस्य ब्रह्मैवेत्येवकारेण मायादिकारणं निरस्तम् ॥ ६ ॥

ब्रह्मणः कारणत्वे मानमाहुः ।

जन्माद्यस्येत्यादिसूत्रैर्व्यासपादैर्निरूपितम् ।
यतो वेत्यादिवाक्येषु वेदे स्पष्टं प्रतीयते ॥ ७ ॥

जन्माद्यस्येत्यादीति * अत्राधिकरणचतुष्टयेन ब्रह्मणः कारणत्वं विचारितम् । तत्र जन्माद्यस्य यतः शास्त्रयोनित्वादिति सूत्रे, यतो वा इत्यादिवाक्यं विषयीकृत्य; किं ब्रह्म कर्त्तृ उताकर्त्तृ इति संशये, ब्रह्मविदाप्नोति परमितिश्रुत्या ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय सत्यं

ज्ञानमनन्तं ब्रह्मेतिं श्रुत्या स्वरूपलक्षणमुक्त्वा परस्य सर्वान्तररूपत्व-बोधनायाकाशाद्वायुरित्यादिसृष्टिरुक्ता। तत्र प्रकृतिगतं कर्त्तृत्वं ब्रह्म-णि आरोप्यते। एवं भृगुर्वै वारुणिरित्यत्रापि गौणमेव कर्त्तृत्वमनू-द्यत इति पूर्वपक्षे। अस्येति। प्रत्यक्षस्य जगतो जन्मादि जन्मस्थि-तिप्रलया यतो यस्मात् तत् कर्तृ, कुतः शास्त्रयोनित्वात्। शास्त्रे योनिः शास्त्रयोनिस्तस्य भावः शास्त्रयोनित्वं तस्माच्छास्त्रोक्तकार-णत्वादित्यर्थः। पूर्वोत्तरकाण्डसृष्टिवाक्यानां सङ्ग्रहार्थं सामान्यग्रह-णम्। स्वरूपलक्षणवाक्यशेषे कर्तृत्वनिषेधाकथनात्। प्रत्युत कार-णत्वस्य कथनादुपनिषदन्तरेऽस्थूलादिवाक्ये धर्मनिषेधनिरूपणेऽपि विरुद्धधर्माश्रयत्वेन प्राकृतधर्मनिषेधपरत्वेनोपपत्तौ लक्षणापादक-स्यारोपस्य दुष्टत्वात्। किञ्च प्रकृतौ कर्तृत्वस्य निषिध्यमानत्वेन जी-वस्य स्वातन्त्र्याभावेन च कर्तृत्वाभावाद् ब्रह्मण्यारोपासम्भवः। त-स्मात् सकलजगत्कारणं ब्रह्म।

अत्र, जन्माद्यस्य यतः, शास्त्रयोनित्वादिति योगविभागः सर्वेषां मते। तन्न। अग्रिमसूत्रेषु साध्यहेतुनिर्देशपूर्वकमेव दर्शनेनात्रा-पि तथैव युक्तत्वात्। ये तु जन्माद्यधिकरणं, शास्त्रयोनित्वाधिकरणं भिन्नमङ्गीकुर्वन्ति, तत्र हि प्रथमसूत्रे हेतोरभावाद् द्वितीये साध्या-भावान्न वाक्यार्थसिद्धिरित्यादिदोष इति श्रीपुरुषोत्तमचरणैर्भाष्य-प्रकाशे बहुशः खण्डितो योगविभागः।

द्वितीयेऽधिकरणे,तत्तु समन्वयादितिसूत्रे ब्रह्म समवायि उत नेति संशये समवायित्वे विकारित्वापत्तिरिति न तादृश इति पूर्वप-क्षे, तत् समवायिकारणं ब्रह्म। कुतः। समन्वयात् सम्यगनुवृत्तत्वाद् अनारोपितानागन्तुकरूपेणान्वयात्। घटे मृद इवास्तिभातिप्रियाणा-ञ्जगत्यनुवृत्तत्वादित्यर्थः। तादात्म्यसम्बन्धेन यदाश्रयं कार्यं भवति तत् समवायिकारणम्।अस्यैवावस्थाविशेष उपादानम्। तल्लक्षणं च स्वसमानसत्ताककार्याकारेण यदाविर्भवति तदुपादानम्। तृतीये-ऽधिकरणे चिद्रूपेण कारणत्वम्। आनन्दमयाधिकरणे आनन्दरूपेण कारणत्वं व्यासपादैर्विचारितमित्यर्थः। *यतो वेत्यादीति* भृगुर्वै वारुणिर्वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति, त५ होवाच यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रय-न्त्यभिसंविशन्ति तद् ब्रह्मेति तद्विजिज्ञासस्वेति स्पष्टमेव कारणत्वं

ब्रह्मणि प्रतीयत इत्यर्थः ॥ ७ ॥

एवं ब्रह्मणः कारणतामुपपाद्य ब्रह्मणो लक्षणमाहुः ॥

**साकारं सर्वशक्त्येकं सर्वज्ञं सर्वकर्तृ च ।**

**सच्चिदानन्दरूपं हि ब्रह्म तस्मादिदं जगत् ॥ ८ ॥**

साकारमित्यादि * आनन्दाकारमित्यर्थः । विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एक इति तैत्तिरीये श्वेताश्वतरे चास्ति श्रुतिः । अत्र मुखादीनां सर्वत्र विद्यमानत्वमुक्तं सर्वेन्द्रियोपलक्षणम् । तेन साकारस्यैव व्यापकत्वम् । बाहुभ्यामितिद्विवचनेन ब्रह्मणो द्विभुजत्वं श्रुतिसिद्धम् । चतुर्भुजत्वं तु स्मृतिप्रसिद्धम् । देव इत्यनेन लीलास्थपुरुषोत्तमस्यात्र ग्रहणम् । दिव्धातोः क्रीडार्थकत्वात् । छान्दोग्ये सर्वकामः सर्वगन्धः सर्वरस इत्युक्तम् । रसो वै स इति तैत्तिरीये । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादिति पुरुषसूक्तेऽपि साकारत्वम् । अग्रे, ततो विराडजायतेतिकथनान्नायं विराट् पुरुषः । सर्वतःपाणिपादान्तं सर्वतोऽक्षिशिरोमुखमित्यादि गीतायाम् । आनन्दमात्रकरपादमुखोदरादिरिति नारदपञ्चरात्रे । अथवा परमात्मानं परमानन्दविग्रहमिति याज्ञवल्क्यस्मृतौ । नन्वपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुस्सशृणोत्यकर्णः । अस्थूलमनण्वित्यादिषु श्रुतिषु निषेधात् कथं साकारत्वमिति चेन्न । अपाणिपादत्वमुक्त्वा यज्जवनग्रहीतृत्वमुक्तं, तेन लौकिकपाणिपादादिनिषेधपरम् । अनण्वित्यादिवाक्येऽप्यग्रे, एतस्य प्रशासने गार्गि द्यावाभूमी विधृते तिष्ठत इत्युक्तम् । यथा सैन्धवो बाह्योऽन्तरः कृत्स्नो रसघन एवं वारे अयमात्मा कृत्स्नः प्रज्ञानघन एवेति श्रुतौ घनपदेन साकारत्वलाभात् । अर्थस्तु यथा सैन्धवः सर्वपरिदृश्यमानो रसघन एवं ब्रह्मापि यावत् तावत् सर्वं प्रज्ञानघन एवेति । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेतिश्रुतेः । यः सर्वज्ञः सर्वविदितिश्रुतेः । सर्वकर्ता सर्वभोक्ता चेति । सत्यं ज्ञानमानन्दं ब्रह्मेतिश्रुतेरानन्दमात्रमेव । एवञ्च करादिरपि ब्रह्मैव । *इदं* परिदृश्यमानम् ॥ ८ ॥

सच्चिदानन्दरूपब्रह्मणः सकाशाज्जगदुत्पत्तौ जडजीवान्तर्यामिणां सदादिभ्य उद्गम इत्याहुः ।

जडजीवान्तःस्थितानां यथाक्रमश उद्गमः ।
अग्नेर्यथा विस्फुलिङ्गास्तथा जीवोद्गमः स्फुटः ॥ ९ ॥

जडेत्यादि * उद्गमो निःसरणम् । जीवोद्गमे श्रुत्युक्तं दृष्टान्तमाहुः* अग्नेरिति* यथा सुदीप्तात् पावकाद्विस्फुलिङ्गा व्युच्चरन्ति, एवमेव तस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे जीवाः कपूयचरणा रमणीयचरणा इति मुण्डकश्रुतौ । एतेन जीवस्योत्पत्तावनित्यत्वापत्तिरिति निरस्तम् । जीवस्य निःसरणमेवोच्यते, न तूत्पत्तिः ॥ ९ ॥

ननु जीवस्य विस्फुलिङ्गवन्निःसरणेंऽशत्वे सर्वशरीरगतचैतन्यानुपलम्भस्तत्राहुः ।

विसर्पिगुणचैतन्योऽणुर्जीवोंशो हरेः स्मृतः ।
जडे चिदानन्दयोस्तु चिदानन्दस्य सर्वशः ॥ १० ॥

विसर्पीत्यादि* विसर्पि प्रसरणशीलं चैतन्यं गुणो यस्य सः । यथा मणेः प्रभा । तथा च व्याससूत्रम् । गुणाद्वाऽऽलोकवत् । अर्थस्तु । जीवस्य चैतन्यं गुणस्तस्मात् सर्वशरीरव्यापी । तत्र दृष्टान्तः । आलोकवत् । सूर्यमण्यादिप्रभा यथा बहुदेशं व्याप्नोति तद्वदित्यर्थः । अग्रे, व्यतिरेको गन्धवत् । अर्थस्तु । व्यतिरेकः । अधिकदेशवर्त्ती चैतन्यं गुणः । गन्धवत् । यथा चम्पकादेर्गन्धश्चम्पकाधिकदेशस्थले उपलभ्यते तद्वदित्यर्थः । नच चम्पकात्तदवयवानां निस्सरणे गन्धोपलब्धिरिति वाच्यम् । निस्सरणे न्यूनत्वापत्तेः । भोग्यादृष्टत्वेन तदवयवपूरणकल्पनायां गौरवात् । किञ्चोग्रगन्धादेः स्पर्शे मुहुर्मुहुः क्षालनेन सुगन्धानपगमादनेकचर्मपुटवेष्टितस्य मृगमदस्य सुगन्धोपलब्धेश्चातोऽवयवकल्पना निरस्तेति दिक् । किञ्च तृतीयोपि दृष्टान्तः । अविरोधश्चन्दनवत् । अर्थस्तु । यथा चन्दनमेकदेशस्थितं सर्वशरीरे सुखं शैत्यं च जनयति तद्वदणुत्वेऽपि सर्वशरीरचैतन्योपलब्धिमित्यर्थः । एषोऽणुरात्मा चेतसा वेदितव्य इतिश्रुतेः । नित्यः सर्वगतस्थाऽणुरिति स्मृतेश्च । सर्वगतेन ब्रह्मणा सह तिष्ठतीति सर्वगतस्थः । द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते इति श्रुतेः । स चासावणुश्चेति तदर्थः । यदि यथाश्रुतार्थः स्यात् । तर्हि स्थाण्वचलपदयोः पर्यायत्वापत्तौ पौनरुक्त्यं स्यात् । अंशो नाम-

व्यपदेशादिति व्याससूत्राद् अंशः। अर्थस्तु। जीवो ब्रह्मणोंऽशः। कुतः नानाव्यपदेशात्। क्वचिद् ब्रह्मत्वेन क्वचिदज्ञत्वेन क्वचिदीशितव्यत्वेना-णुत्वेन व्यापकत्वेन निरूपणादेकस्यैव विरुद्धधर्माश्रयत्वं ब्रह्मातिरिक्तस्य न सम्भवति। अतो जीवो ब्रह्मांश इति। *हरेरिति* ममैवांशो जीवलोके जीवभूतः सनातनः इति गीतावाक्यतः। ननु सर्वस्य ब्रह्मात्मकत्वेन कथं त्रैविध्यमत आहुः *जडं चिदानन्दयोरित्यादिना*। आनन्दतिरोभावेन भेद इति भावः ॥ १० ॥

तिरोधानं हरीच्छातो निबन्धादिषु वर्णितम् ।
आविर्भावे तु सर्वं हि ब्रह्मैवेति न संशयः ॥ ११ ॥

तिरोधानमिति *। एकोऽहं बहु स्यामितिश्रुतिसिद्धेच्छात इत्यर्थः। ननु तर्हि भेदापत्तिरत्राहुः *आविर्भावे त्वित्यादि*। आनन्दाविर्भावो जीवे, चिदानन्दयोर्जडे ॥ ११ ॥

ननु जीवादिभावे किं प्रयोजनमत आहुः।

रमणार्थमिदं सर्वं ब्रह्मैव स्वेच्छयाऽभवत् ।
यथा सर्पः स्वेच्छया हि कुण्डलाकारतां गतः ॥ १२ ॥

रमणार्थमिति*। एकाकी न रमते स द्वितीयमैच्छत्, तदात्मानं स्वयमकुरुतेत्यादि श्रुतेः। ननु तर्हि विकारित्वापत्तिस्तत्राहुः *यथेति* ॥ १२ ॥

न विकारि तथा ब्रह्म व्यासैः सूत्रे निरूपितम् ।
सुवर्णस्याविकारित्वं कामधेनोर्मणेरपि ॥ १३ ॥

सूत्रे इति *। उभयव्यपदेशात्त्वहिकुण्डवदिति सूत्र इत्यर्थः। अर्थस्तु, उभयोर्विरुद्धधर्मयोर्व्यपदेशस्तस्मात्। निर्गुणत्वेनाऽनन्तगुणत्वेन परिणामित्वेनाविकारित्वेन विरुद्धधर्मरूपेण व्यपदेशाच्छ्रुतौ कथनात् सर्वाकारं ब्रह्मेत्यर्थः। तथाच श्रुतिषु, साक्षी चेता केवलो निर्गुणश्चेत्युक्त्वा, एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति। ततो यदुत्तरं तदरूपमनामयमित्यग्रे सर्वाऽऽननशिरोग्रीव इति श्वेताश्वतरे। तैत्तरीये यदेकमव्यक्तमनन्तरूपं, विश्वतश्चक्षुरुत विश्वतोमुख इत्यादि चोक्तम्। तथानन्दवल्यां, तदात्मा-

न॰ स्वयमकुरुत, यद्वैतत्सुकृतमिति । अविनाशी वा अरेऽयमात्मे-त्यादिकं चान्यत्रोक्तमेवं विरुद्धधर्माश्रयत्वेन बहुशो व्यपदेशादित्य-र्थः । तर्हि कथमेकमनेकधेति तत्राह । अहिकुण्डलवत् । यथा सर्पः सरलः कुण्डलाकारश्च भवति । तद्वद् ब्रह्म सर्वाकारं भवति । न हि सर्पस्य कुण्डलाकारे कोऽपि विकारः । भाष्ये तु, सर्वाणि तै-जसान्यविकृतानीत्युक्तम् । एवञ्च सुवर्णस्यानेकाकारत्वेऽपि न सु-वर्णस्यान्यथाभावः । सुबोधिन्यां तु, कामधेनुकल्पद्रुमचिन्तामणेश्च जायमानाः पदार्था दृश्यन्ते, तेन न कामधेन्वादीनां विकृतत्वमित्यु-क्तमिति दिक् ॥ १३ ॥

ननु सर्वस्य घटादेरुत्पत्तिनाशदर्शनेनानित्यत्वात् कथं भगव-द्रूपत्वं कार्यस्येत्याशङ्कामपनयन्ति ।

> आविर्भावतिरोभावौ पदार्थानां यतस्ततः ।
> नानित्यता तु विज्ञेया शास्त्रविद्भिर्विचक्षणैः ॥ १४ ॥

आविर्भावेत्यादि* । घटपटादिसर्वाकारस्वरूपेण या भगव-त आविर्भावेच्छा तया आविर्भवति । तथाच श्रीमदाचार्यचरणै-र्निबन्धे ।

> मृदादि भगवद्रूपं घटाद्याकारसंयुतम् ।
> मूलेच्छातस्तथा तस्मिन् प्रादुर्भावो हरेस्तदेति ।

व्याख्यातं च तैरेव । मृदि घटादयो यावन्तो भविष्यन्ति ते सर्वे कारणत्वेन वर्तन्त इत्यङ्गीकर्त्तव्यम् । अन्यथा ततः प्रादुर्भावो नोपपद्यते । ततः सामर्थ्यं भगवत्त्वेन सङ्गच्छते । अतो मृदादिभग-वद्रूपं घटादिकार्यं च भगवद्रूपं तत्रैव तिष्ठति । मूलेच्छातः पुरुषोत्त-मेच्छात इति ।

> तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
> आविर्भावतिरोभावजन्मनाशविकल्पवद् इति विष्णुपुराणे

प्रथमेंऽशे । वस्तुतो नित्यं, किन्त्वाविर्भावतिरोभावजन्मना-शविकल्पवत् । आविर्भावश्च तिरोभावश्च आविर्भावतिरोभावौ ता-वेव जन्मनाशविकल्पौ तद्वदित्यर्थः । 'आविर्भावतिरोभावौ शक्ती वै मुरवैरिण इति वाक्यं श्रीमदाचार्यचरणैरुक्तम् । भगवच्छक्तित्वा-देव वीर्यादिपरिणामानां देहादिभावः । परास्य शक्तिर्विविधैव श्रू-

यते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः। अनन्तशक्तित्वाद्
भगवतः ॥ १४ ॥

आविः प्रकटं भावयति कारणान्तःस्थं कार्यं बहिः प्रकटीकरोति या शक्तिर्निमित्तगतोपादानगता च सा आविर्भावशक्तिः। कार्यं कारणे तिरोभावयति सा शक्तिस्तिरोभावशब्दवाच्येत्यभिप्रेत्याहुः।

तिरोभावे तु कार्यं हि वर्तते कारणात्मना।
आविर्भावे तु कार्यं हि यथा मृदि घटादयः ॥ १५ ॥

तिरोभावे त्वित्यादि*। अत्रैवं ज्ञेयम्। तन्तुतुरीवेमादिभ्यः पटोत्पत्त्या मृद्दण्डचक्रादिभ्यश्च घटोत्पत्त्या तस्य तस्य पटघटजनने शक्तिरिति निश्चीयते। सा च न स्वभावो, नापि स्वरूपम्। तथा सति तस्य सार्वदिकत्वाच्छीर्णेभ्योऽपि तन्त्वादिभ्यः पटाद्युत्पत्तिः स्यात्। भर्जिताद् बीजादप्यङ्कुरोत्पत्तिः स्यात्। प्रतिबन्धकमणिसमवधानेऽपि वन्हेस्तृणादिकं दह्येत। स्वभावस्यानपायात्। स्वरूपस्य च सत्त्वात्। अतः शीर्णतन्त्वादिषु कालेन, भर्जितेषु भर्जनेन च नाश्या, अग्नेर्मणि सन्निधाने प्रतिबध्या च काचित् स्वभावात् स्वरूपाच्चातिरिक्तैव शक्तिरङ्गीकार्या। ननु तन्त्वादीनामविशीर्णत्वेन बीजानामप्यभर्जितत्वेन रूपेणैव कार्यजननदर्शनात्तेनैव रूपेण कारणतेति नातिरिक्तशक्तिकल्पनं गुरुभूतम्। वन्हिस्थलेऽपि प्रतिबन्धकमण्यभावेन निर्वाहाच्चेति चेन्न। दावदग्धवेत्रबीजेभ्यः कदलीकाण्डजननस्य भामत्यां प्रदर्शितत्वात् काचिच्छक्तिर्भर्जनेन नाश्यते, अपरा आधीयत इति मन्तव्यम्। वन्हिस्थले प्रतिबन्धकमणिसमवधाने उत्तेजकेन मणिना दाहदर्शनादुत्तेजकाभावविशिष्टमण्यभावविशिष्टवन्हेरेव कारणत्वेऽतिगौरवम्। तथाहि। मण्यभावत्वेन प्रवेशो नानाकार्यकारणभावकल्पनाऽत्यन्तमेव गुर्वी। मन्त्रौषधादिनापि दाहाभावात्। एवमुत्तेजकानामपि नानात्वात्तत्तत्स्वरूपेण प्रवेशे ततोप्यत्यन्तगौरवम्। यत्किञ्चित्त्वेन प्रवेशे यावत्तदभावविशिष्टमण्यभावविशिष्टस्याग्नेर्दाहं प्रत्यकारणत्वात्ततो दाहाभावापत्तिः। यावत्त्वेन प्रवेशे यत्किञ्चिद्वैशिष्ट्ये दाहाभावापत्तिः। यथाकथञ्चित्त्वेन प्रवेशेऽपि तादृशकार्यकारणभावज्ञानस्योत्तेजकतदभावतद्वैशिष्ट्यज्ञानाधीनतया

तादृशगुरुशरीरकारणतास्वरूपज्ञानस्यैव दौर्घट्यमिति तदपेक्षया शक्तिकल्पनमेव ज्याय इति सर्वनिर्णयावरणभङ्गे श्रीपुरुषोत्तमचरणैर्विस्तरशो निरूपितमिति ततोऽवधेयम् । तस्मादाविर्भावतिरोभावयोः शक्तित्वम् । सा शक्तिमति भगवद्रूपे घटे तिष्ठति । अत एव घटो भवतीति कर्तरि प्रयोगः । स्वमते सर्वेषां भगवद्रूपत्वात् । इच्छासहकारेण नित्ययोरप्याविर्भावतिरोभावयोर्न सदैवोदयः । विशेषस्तु विद्वन्मण्डने श्रीमत्प्रभुचरणैरुक्तम् ॥ १५ ॥

आविर्भावतिरोभावलक्षणमाहुः ।

यदाऽनुभवयोग्यत्वं वर्त्तमानस्य वस्तुनः ।
आविर्भावः स विज्ञेयस्तिरोभावस्ततोऽन्यथा ॥ १६ ॥

यदेत्यादि * । योग्यतानिवेशेन दरीविवराङ्कुरेष्वपूर्वे च नाव्याप्तिः । शशशृङ्गादौ च नातिव्याप्तिः । वृद्धिविपरिणामादिष्वपि पूर्वरूपतिरोभावेन द्वितीयस्याविर्भावः । परिणामे रूपान्तरस्य । क्षये तु तिरोभावः । * अन्यथेति * तदयोग्यत्वमित्यर्थः ॥ १६ ॥

नन्वनयोरङ्गीकारे प्रागभावादिसत्त्वे चातिगौरवमत आहुः ।

प्रागभावादयो नाङ्गीकार्या आभ्यां यतोऽखिलम् ।
तद्विस्तरभिया नात्र लिख्यतेऽन्यत्र दृश्यताम् ॥ १७ ॥

प्रागभावादय इति * । प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभाव एते नाङ्गीकार्याः । यत आभ्यामाविर्भावतिरोभावाभ्याम् । कया रीत्या सिद्धिस्तत्राहुः * तदित्यादि * । अन्यत्र * प्रागभावखण्डनसर्वनिर्णयनिबन्धावरणभङ्गादिषु । तत्र प्रागभावः कारणावस्थातो नातिरिच्यते । तस्य भिन्नकारणत्वकल्पनायां प्रमाणाभावात् । अग्रिमजननज्ञानेनैव तस्यानुभव इति श्रीमदाचार्यचरणैरुक्तं निबन्धे । नचेह कपाले घटो नास्तीति प्रतीतिस्तत्र मानम् । तस्या घटत्वावच्छिन्नप्रतियोगिताकाभावविषयतया सामान्यत्वेन प्रागभावाख्यविशेषानवगाहित्वात् । एवं ध्वंसेऽपि दण्डादिस्वरूपमेव । तिरोभावशक्त्यतिरिक्तस्य ध्वंसस्य निरूपयितुमशक्यत्वात् । तेन रूपान्तरं पश्यन् पूर्वस्य तिरोभावमेव मन्यते ध्वस्त इति, श्रीमदा-

चार्यचरणैस्तत्रै विनिरूपितम् । तिरोऽप्रकटं भावयति। तिरोभवनं वा तिरोभावः । उभयथाऽपि निमित्तोपादानान्यतरस्वरूपातिरिक्तो ध्वंसो न निरूपयितुं शक्यः। तदतिरिक्तस्यादर्शनात्। तथाच कार्यप्रतिकूला कारणावस्थैव ध्वंस इति तदर्थः। प्रागभावादिप्रयोगाश्च, घटस्यानन्यथासिद्धनियतपश्चाद्भावित्वं दण्डस्य तादृशपूर्वभावित्वं चापेक्ष्य यथा घटदण्डयोः कार्यकारणप्रयोगस्तथा घटादेरग्रिमजननमाकारान्तरं चापेक्ष्य कारण एव प्रागभावध्वंसपदप्रयोगः। घटः पटो नेत्यन्योन्याभावप्रतीतावपि घटे मूलेच्छया पटादीनां तिरोभावः। एवं पटे घटादीनाम् । यद्यपि सर्वेषां पदार्थानां ब्रह्मरूपत्वेन सर्वधर्मवत्वम्। तथापि मत्स्याद्यवतारवज्जलहरणकार्यार्थमेव घटब्रह्मण आविर्भावः। एवमावरणकार्यार्थमेव पटरूपब्रह्मणः। एतेनान्योन्याभावानङ्गीकारे घटेन पटकार्यं स्यादित्यादि निरस्तम् । भगवतस्तथेच्छातः सर्वमनवद्यम् । एवमत्यन्ताभावोऽपि तिरोभावेनैव गतार्थ इति दिक्। अभावस्याधिकरणरूपत्वमित्यन्यत्र विस्तरः॥ १७॥

एवं प्रपञ्चस्य सत्यत्वमुपपाद्य तत्प्रसङ्गेनाविर्भावतिरोभावौ निरूप्य प्रस्तुतं कार्यस्य कारणस्याधिकरणस्य करणस्यापादानस्य सम्बन्धस्य सम्प्रदानस्य कर्मणः कर्त्तुः प्रकारस्य ब्रह्मरूपत्वमेवेति श्रीभागवतपद्येनाहुः।

> यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा।
> स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः॥ १८॥
> इति भागवते पद्ये सर्वस्य ब्रह्मता श्रुता।
> श्रुतिसूत्रैः स्मृतिगणैर्दृष्टिः स्वर्णार्थिनो यथा॥ १९॥

यत्रेत्यादि *। *यदेति* कालार्थकदाप्रत्ययेन कालस्यापि ब्रह्मत्वमुक्तम् । अत एव, कालोऽस्मीति श्रीभगवद्वाक्यम्। एतेनाऽस्मन्मते न द्वैतलेशः। एतेनोपादानत्वे निमित्तत्वानुपपत्तिस्तत्त्वे चोपादानस्येति परास्तम्। सर्वभवनसमर्थत्वाद् ब्रह्मणः । विरुद्धधर्माश्रयत्वस्य ब्रह्मणो लक्षणत्वात्। तच्च प्रागेव निरूपितम्॥१८॥

इतीत्यादि*। श्रुतयः, सर्वं खल्विदं ब्रह्मेत्यादयः। एवञ्चात्मा-

ऽक्षात्स्थ्यैमित्यादिसूत्राणि । भूतानि विष्णुर्भुवनानि विष्णुरिति विष्णुपुराणे । वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इति गीतायाम् ॥ १९ ॥

दृष्टान्तमुपपादयन्ति ।

सुवर्णस्य च ये खण्डाः कटका मुद्रिकादयः ।
सुवर्णत्वेन गृह्णाति तथा ब्रह्मविदो मतिः ॥ २० ॥

सुवर्णस्येत्यादि * ।'यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु । एवं वचोभिर्भगवानधोऽक्षजो व्याख्यायते लौकिकवैदिकैर्जनैरिति' श्रीभागवताष्टमस्कन्धवाक्यात् । 'यथा सुवर्णं सुकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य । तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वद्' इति तस्यैवैकादशस्कन्धवाक्याच्चेति भावः ॥ २० ॥

तत्र श्रुतिं प्रमाणयन्ति ।

यथा सौम्येत्यादिश्रुतौ स्पष्टमेव निरूपितम् ।
तथा तत्त्वमसीत्यत्राऽभेदोंऽशांशिविचारतः ॥ २१ ॥

यथेत्यादि* । यथा सौम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं भवतीत्यादिश्रुतौ यथा मृत्तदवयवयोरभेदस्तथा तत्त्वमसीत्यत्राभेदोंऽशांशिनोरभेदादित्यर्थः ।

अत्र सर्वेषां मतसङ्ग्रहश्लोकः ।

केचित्तत्त्वमसीतिवाक्यविषये तत्त्वम्पदे लक्षणां
केचित्तत्र ङसो लुकं विदधते भाष्यं तु केचिज्जगुः ॥
केचिद्भिद्विषयादभेदमपरे छिन्दन्त्यतत्त्वं पदं
सिद्धान्ते तु सुवर्णवज्जगदिदं ब्रह्मैव जीवस्तथा ॥ १ ॥

अस्यार्थस्तु । केचिच्छङ्कराचार्याः । तच्छब्देन सर्वज्ञत्वादिविशिष्टं ब्रह्म, त्वंशब्देनाल्पज्ञत्वादिविशिष्टो जीवस्तयोरभेदो न सम्भवतीति भागयोः सर्वज्ञत्वाल्पज्ञत्वयोस्त्यागे केवलं चिदंशमात्रग्रहणेनाभेदः । सोऽयं देवदत्त इतिवद्भागत्यागलक्षणां विदधते । केचिद् रामानुजमाध्वशैवाः, तत्त्वमित्यत्र, सुपां सुलुक्पूर्वसवर्णाच्छेयाडा-

जगतो ब्रह्मत्वं तस्यावबोधनं याथार्थ्यज्ञानमित्यर्थः । तर्हि ब्रह्मज्ञानस्य किं फलमित्याहुः * ब्रह्मज्ञस्येत्यादि *। श्रीमदाचार्यचरणैर्भाष्ये ब्रह्मज्ञानेनाविद्यानिवृत्त्या प्राकृतधर्मराहित्येन शुद्धत्वसम्पादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता सम्पद्यते । तादृशे जीवे स्वीयत्वेन वरणे भक्तिभावात् सहकारियोग्यतासम्पत्त्या पुरुषोत्तमप्राप्तिर्भवतीति निर्णीयत इत्युक्तम् । नन्वत्र किं मानमत आहुः ।

आनन्दव्रततताविति * आनन्दवल्ल्यामित्यर्थः । वल्ली तु व्रततिर्लतेत्यमरः । तस्यां हि ब्रह्मविदाप्नोति परम्, तदेषाभ्युक्ता, सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति । अर्थस्तु । ब्रह्मवित् परं ब्रह्मणः सकाशादुत्कृष्टं पुरुषोत्तमं प्राप्नोतीत्यर्थः । परशब्देनात्र ब्रह्मैवोच्यते तर्हि ब्रह्मप्राप्तेर्ज्ञानात्मकत्वेन ब्रह्म प्राप्तो ब्रह्म प्राप्नोतीत्यर्थः । स त्वसङ्गतः । साध्यसाधनव्याघातस्तस्मात् । परशब्दस्योत्कृष्टवाचित्वेनोत्कर्षस्य सांनिध्याद् ब्रह्मणः सकाशात् परं पुरुषोत्तममित्येवार्थः । विशेषतस्तद्विवक्षमाणानुभवैकगम्योऽयमानन्दो, न मनोवाग्विषय इति सूचयितुमाह । तदेषेत्यादि । तदित्यव्ययम् । तद् ब्रह्मविदः परप्राप्तिलक्ष्यणमर्थं विशदतया प्रतिपाद्यत्वेनाभिमुखीकृत्य ऋगेषा विदितपरब्रह्मकैरुक्ता । पूर्ववाक्यविवरणमनया क्रियत इत्यर्थः । तामेवाह । सत्यमित्यादि । गुहायां हृदयाकाशे, परमे व्योमन् परमव्योम्नीत्यर्थः । अक्षरब्रह्मात्मके व्यापिवैकुण्ठे, निहितं स्थापितमिव यो वेद स भक्तो ब्रह्मणा विपश्चिता । विविधभोगचतुरेणेत्यर्थः । अत्र विविधं पश्यच्चित्त्वं विपश्चित्त्वं, पृषोदरादित्वाद्यच्छब्दलोपः । तेन सह सर्वान् कामानश्नुते भुङ्क्त इत्यर्थः । अत्र तृतीयया ब्रह्मणो, गौणत्वं, भक्तस्य भोगे मुख्यत्वं बोध्यते । अहं भक्तपराधीनो, वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथेत्यादिवाक्यादिदमनुग्रहैकलभ्यमित्यर्थः । विशेषतो भाष्यादवधेयम् ॥ ८३ ॥

नन्वविद्यायाः प्रतिबन्धकत्वे कथं परप्राप्तिरित्याशङ्कायां, 'विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते' इति श्रीभागवतवाक्येन मायानिर्मितत्वादविद्याया, अतो मायापगमे तस्या अपि नाशो भविष्यतीत्यभिप्रायेण गीतावाक्यमाहुः ।

मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते।
इतिवाक्यात्तु भक्तानामविद्याविनिवृत्तितः॥ ८४ ॥

मामेवेत्यादि * एवकारेणाऽन्यप्रपत्तिर्न मायातरणकारिका। 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा। मत्तः परतरं किञ्चिन्नान्यदस्ति धनञ्जय' इत्यादिश्रीमुखवाक्यात् पुरुषोत्तमस्य सर्वोत्कृष्टज्ञाने प्रपत्तिर्भवति। एतादृशज्ञानस्य फलं तु 'असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु। यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यत' इति वाक्यादक्षरज्ञानादिकं सर्वं सुलभमतो भक्तानां तु श्रीकृष्णप्रपत्त्यैवाविद्यानिवृत्तिरिति भावः॥ ८४ ॥

ततः किमत आहुः।

अलौकिकाकारसिद्ध्यै प्रवेशो हरिणोदितः।
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्॥ ८५ ॥

अलौकिकाकारसिद्ध्या इति * सिद्ध्यर्थमित्यर्थः। * प्रवेश इति * यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते, नद्यः प्रविष्टा इव नामरूपे इत्यादिश्रुतिसिद्धप्रवेश इत्यर्थः। * हरिणेति * श्रीकृष्णेनेत्यर्थः। गीतायामिति शेषः। विशते तदनन्तरम्, ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपेत्यादिश्लोकैरित्यर्थः। नन्वक्षरे लये कथं पुरुषोत्तमप्राप्तिरित्याशङ्कायां तस्य पुरुषोत्तमगृहरूपत्वात् तत्र प्रवेशे प्राप्तिर्भवतीति तत्पुरुषोत्तमगृहे गीताप्रमाणमाहुः। * अव्यक्त-इत्यादि *। अक्षरब्रह्मणोऽव्यक्त इति नाम। एतेनाऽव्यक्तशब्दो मायावाचक इत्यपास्तम्। अव्यक्तादीनीत्यत्राव्यक्तशब्देनाक्षरब्रह्मैव ज्ञेयम्। एतेन जगतो मायिकत्वं निरस्तम्। परमां * सर्वोत्कृष्टां गतिं मोक्षरूपाम् आहुः। तत्त्वविद इति शेषः॥ ८५ ॥

यं प्राप्य न निवर्तन्ते तद्धाम परमं मम।
इति वाक्येन भगवद्गृहं ब्रह्म प्रकीर्तितम्॥ ८६ ॥

न निवर्त्तन्त इति * । न स पुनरावर्त्तत इति श्रुतेः। मम क्षराक्षरातीतपुरुषोत्तमस्य धाम गृहमित्यर्थः। अत्र भक्तानां त्वक्षरं

ब्रह्म पुरुषोत्तमगृहरूपत्वेन, ज्ञानिनां ब्रह्मत्वेन, पुरुषोत्तमस्यैव, मल्लानामशनिरित्यादिस्वभावानुसारेण । यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहायेति श्रीभागवतात् ॥ ८६ ॥

तर्ह्यक्षरब्रह्मैव परं प्राप्यस्थानमिति चेत् तत्राहुः ।

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
इत्यग्रिमेण वाक्येन गेहाधीशो निरूपितः ॥ ८७ ॥

पुरुष इत्यादि * 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति वाक्यात् । परः पुरुषः पुरुषोत्तमः श्रीकृष्ण इत्यर्थः । अत्र सिद्धान्ते जन्ममरणाद्युपाधितया क्षरो जीवः । अक्षरोऽन्तर्यामी । अक्षरातीतः पुरुषोत्तमः । द्वाविमौ पुरुषौ लोक इत्यादिगीतावाक्यात् । अयं विचारः श्रुतिरहस्यप्रकाशे निपुणतया निरूपितो मयेति नेह तन्यते ॥ ८७ ॥

पुरुषोत्तमलाभः कथं तत्राहुः ।

भक्त्या लाभो हि निर्दिष्टो भक्तिश्चाचार्यसंश्रयात् ।
श्रीमदाचार्यचरणभजनादेव नान्यथा ॥ ८८ ॥

भक्त्येति *। * श्रीमदाचार्यचरणेत्यादि *। अत्र क्रमस्तु, पूर्वं भगवत्कृपाङ्कुरस्य स्वतः संस्कारेण भगवन्मार्गीयसङ्गादिना वा उद्बोधे मार्गेऽस्मिन् रुचिः । ततोऽस्मिन् प्रवेशेच्छा । तत्राप्यङ्कुरस्य दृढत्वेऽस्मिन्मार्गे सर्वोत्तमत्वभानम् । प्रवेशश्च द्वारभूतश्रीमदाचार्यकुलगुरुद्वारा शरणागतिः । ततः शुद्धः कृष्णं भजेदितिसिद्धान्तात् सपरिकरस्य स्वस्य च शुद्धिरपेक्षिता । सा लोके दुर्घटाऽतो दारान् सुतान् गृहान् प्राणान् यत् परस्मै निवेदनमिति विधिपूर्वकं सिद्धं समर्पणम् । तेन च, ब्रह्मसम्बन्धकरणादित्यादिवाक्येन सर्वदोषनिरासोक्तेः समर्पणोत्तरं सर्वत्र दोषाभावात् प्रतीयमानानां चाभासमात्रत्वाद् गङ्गाजलन्यायेन दोषाणां गौणभावाच्च सेवायामधिकारः । ततः सतां, द्वारभूतश्रीगुरोर्वा सङ्गेन शिक्षया वा श्रीमदाचार्यचरणेषु भगवदभेदबुद्धिः । सर्वोत्तमस्तोत्रादिभिस्तद्भजनम् । तत एतन्मार्गीयसङ्गेन भगवद्भजनस्वीयग्रन्थावलोकनश्रवणा-

दिना प्रतिबन्धनिवृत्तौ दोषनिवृत्तिः । सेवोपयोगिगुणवृद्धिश्च । ततः सेवानैरन्तर्ये सकुटुम्बस्य भगवत्प्राप्तिरिति । * अन्यथेति * । श्रीमदाचार्यचरणशरणं विनेत्यर्थः । अत एव श्रीहरिरायाः आहुः ।

नाश्रितो वल्लभाधीशो, न च दृष्टा सुबोधिनी ।
नाराधि राधिकानाथो वृथा तज्जन्म भूतल इति ॥

वृथेत्यस्य निष्फलमित्यर्थः ॥ ८८ ॥

श्रीमदाचार्यचरणद्वाराङ्गीकृतस्य लीलाधिकारिणो यत् करोति भगवाँस्तदाहुः ।

**ब्रह्मभावं तु सम्पाद्य परमानुग्रहाद् विभुः ।**
**गृहास्थितं स्वीयजीवं समुद्धरति यत्नतः ॥ ८९ ॥**

ब्रह्मभावमित्यादि * । यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयत इत्यादिश्रुत्या, नद्यः प्रविष्टा इव नामरूपे इत्यादिश्रुत्या, विशते तदनन्तरमिति स्मृत्या निरूपिते ब्रह्मणि लयो ब्रह्मभावसम्पत्तिः । तादृशं कृत्वेत्यर्थः । * परमानुग्रहात् * स्वीयत्वेनाङ्गीकारात् । यमेवैष वृणुते तेन लभ्य इति श्रुतेः । मुक्तिदानं तु सर्वेभ्यः । भक्तिं तु परमानुगृहीतस्यैव । मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमिति श्रीभागवतोक्तेः । अक्षरं ब्रह्म पुरुषोत्तमस्य गृहम् । तत्र ब्रह्मैक्यतया स्थितं स्वयं समुद्धरति । तस्मात् पृथक् करोतीत्यर्थः । * यत्नत इत्यनेन तस्योपरि स्नेहभरेण तद्वियोगासहिष्णुस्तस्योद्धरणे इच्छां करोतीति सिद्धम् । अत्र प्रमाणं तु व्याससूत्रं, सम्पद्याविर्भावः स्वेन शब्दादिति । ब्रह्मभावं सम्पाद्य स्वेन पुरुषोत्तमेनाविर्भावः क्रियते । एवं कथमुच्यते, तत्राह शब्दादिति । यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेतिशब्दात् । अत्र पुरुषोत्तमसाहित्येन सर्वकामोपभोगो जीवस्य निरूपितः । स लीनस्योद्धरणं विना न सम्भवत्यस्मादुद्धरतीत्यर्थः । तथाच । श्रीभागवते ।

ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः ।

ददृशुर्ब्रह्मणो लोकमिति । श्रीमदाचार्यचरणैरपि फलप्रकरणप्रारम्भे ॥

ब्रह्मानन्दात् समुद्धृत्य भजनानन्दयोजने ।
लीलाया युज्यते सम्यक् सा तुर्ये विनिरूप्यत इति ॥

शुद्धपुष्टिलीलास्थजीवानां तु न ब्रह्मणि सायुज्यमुद्धरणं च । अत एव गोपानामेव मग्नत्वमुद्धृतत्वमुक्तं, न व्रजसुन्दरीणाम् । अत एव दामोदरदासादिषु लीलानुभवः स्पष्टः सङ्गच्छते । नन्वलौकिकदेहाप्तौ देहस्यानित्यत्वमायातम् । तद्विषयिण्या लीलाया अपीति चेन्न पुरुषोत्तमस्य लीलाया नित्यत्वं श्रुतिस्मृतिन्यायादिसिद्धम् । उपपादितं चास्मत्प्रभुचरणैर्विद्वन्मण्डने भक्तिविषयिण्या लीलाया अपि नित्यत्वं, ध्रुवासोऽस्य कीरय इति श्रुतिसिद्धम् । यथाऽक्षरब्रह्मणः सर्वत्र व्यापकत्वमेवं भगवद्भक्तस्यालौकिकाकारस्य व्यापकत्वेन प्राकृतशरीरेऽपि तिरोहिततया वर्त्तमानमानन्दाकाररूपम् । अत एव, निराकारास्तदिच्छयेत्युक्तं श्रीमदाचार्यचरणैः । आनन्दस्यैवाकारत्वेन तत्तिरोधाने निराकारत्वम् । तत्प्रादुर्भावे साकारत्वमेवं तद्विषयिण्या लीलायास्तदैवाविर्भावः । अतो नानित्यत्वमिति दिक् । येषां तु सायुज्यं, तेषामलौकिकाकारप्रादुर्भावार्थमेव लयः । मर्यादायास्तथात्वात् । येषां च न, तेषां तच्छरीर एवालौकिकाकारस्याविर्भावात् । ननु लीलानुभवार्थमाविर्भावे पुरुषोत्तमेन सह भेदो जीवस्यायात इति चेत्, सत्यम् । अत्र लीलास्थानां ब्रह्मरूपत्वेन न भेद इति । वस्तुतस्तु जीवस्याभेदोऽक्षरब्रह्मणा सह । अभेदबोधकाश्च श्रुत्यादयोऽक्षरब्रह्माऽभेदं बोधयन्ति, न पुरुषोत्तमाऽभेदम् । तथाच श्रीमदाचार्यचरणाः, पुरुषोत्तमे लयेन लीलाऽननुभवे नाश एव स इति । अत एव श्रीमत्प्रभुचरणपौत्रैर्देवकीनन्दनैः, 'अक्षरेण सहैक्यं हि जीवस्य श्रुतयो जगुरित्युक्तम् । अत एव परेणाऽभेदबोधको मार्गस्तामसानामिति पाद्म उत्तरखण्ड उक्तं शिवेन ।

शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् ।

येषां स्मरणमात्रेण पातित्यं ज्ञानिनामपीति प्रतिज्ञाय, शैवपाशुपतवैशेषिकन्यायसांख्यचार्वाकबौद्धशास्त्राणि तामसानीत्युक्त्वा ।

मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥
अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् ।

कर्मस्वरूपत्याज्यत्वमत्रैव प्रतिपाद्यते ॥
सर्वकर्मपरिभ्रष्टं विकर्मत्वं तदुच्यते ।
परेशजीवयोरैक्यं मयाऽत्र प्रतिपाद्यते ॥
ब्रह्मणस्तु परं रूपं निर्गुणं वक्ष्यते मया ।
सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे ॥
वेदार्थवन्महच्छास्त्रं मायावादमवैदिकम् ।
मयैव कथितं देवि जगतां नाशकारणादिति ॥

नागोजीभट्टस्तु मार्कण्डेयान्तर्गतदेवीमाहात्म्यटीकायां, मायावादमितिश्लोके चरणत्रयं यथास्थितं पठित्वा जगतां नाशकारणादिति पपाठेति, तत्तु प्राचीनार्वाचीनसन्दर्भावलोकनेन ब्राह्मणरूपिणेति प्रतिभातीति तुच्छमेवेति । अत एव सायुज्यं लयः । सह युनक्तीति सहयुक्, सहयुजो भावः सायुज्यमित्यर्थद्वयं ब्रह्मपरब्रह्मविषयत्वेन सङ्गतं भवतीति दिङ्मात्रमुक्तम् ॥ ८९ ॥

ननूद्धारानन्तरं तस्य कथं स्थितिस्तत्राहुः ।

उद्धृतौ परमक्लेशो विरहाऽनलसम्भवः
यदा देहादिनाशाय समर्थो जायते तदा ॥ ९० ॥
निजं श्रीमत्कृष्णचन्द्रः स्वाधिकारानुसारतः ।
परमानन्दलीलां तामनुभावयति प्रभुः ॥ ९१ ॥

उद्धृताविति * । भक्तस्य ब्रह्मानन्दादुद्धृतौ । विरहानलाद्वियोगाग्नेः सकाशात् सम्भव उत्पत्तिर्यस्य, एतादृशो यः परमक्लेशो देहादिनाशाय यदा समर्थो जायते, तदेत्यन्वयः । यद्वा परमक्लेशो विरहानलसम्भवस्ताप इति शेषः । तदा तस्मिन् काले ॥ ९० ॥

निजं जीवं परमकारुणिकः श्रीमत्कृष्णचन्द्रो यथाधिकारं परमानन्दलीलामनुभावयतीत्यर्थः । गणितानन्दव्यावृत्त्यर्थं परमेत्यानन्दस्य विशेषणम् । ताम् *अनुग्रहैकलभ्याम् । प्रभुः* समर्थः । अनुभवे भक्तस्य प्राधान्यं तदुदितं प्राक् । रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति, को ह्येवान्यात् कः प्राण्याद् यदेष आकाश

आनन्दो न स्यात्, एष ह्येवानन्दयातीति श्रुतिः। अत्र रसात्मकभगव-त्स्वरूपलाभे सत्यानन्दी भवतीत्यानन्दवत्त्वमुक्त्वा जीवनहेतुत्वं परमानन्दहेतुत्वं चोच्यते । मरणहेतूपस्थित्यभावे जीवनहेतुं न वदे-त् । अतो रसस्य संयोगवियोगभावत्वेन पूर्णतया विरहतापस्यो-पमर्दकत्वेन प्राणस्थितिरपि न स्यात् । यद्येषः स्फुरद्रूपः, आनन्दः आकाशो भगवान् न स्यात् । को वा जीवयेत्र कोपीत्यर्थः । एतादृ-शापन्निवारणं भगवतः एवेति ज्ञापनाय श्रुतौ हिशब्दः । तादृशस्य जीवनमावश्यकमिति ज्ञापनायैवकारः । तापात्मकस्यानन्दरूपत्वा-यानन्दपदम् । तदनन्तरं प्रगटीभूय तदन्यः को वा दर्शनस्पर्शाश्ले-षणभाषणादिभिः स्वरूपानन्ददानेनाऽन्यात् पूर्वतापनिवृत्तिपूर्वक-मानन्दपूर्णं कुर्यादित्यर्थः। अन्यथाऽन्यात् प्राण्यादित्युभयत्रानितेः स-त्त्वात् पौनरुक्त्यं स्यादिति। श्रीमद्भाष्यकारचरणैः, स्पष्टो ह्येकेषामिति सूत्रे, एकेषां शाखिनां भगवत्स्वरूपलाभानन्तरं दुःखतन्निवर्तनलक्ष-णोऽर्थः स्पष्टः पठ्यत इत्युक्तमिति विस्तरावलोकनेच्छुभिस्ततोऽवधे-यम् । दुःखस्य परमफलरूपत्वं तु भाष्यविद्वन्मण्डनादौ निरूपितम्। मयाऽपि श्रुतिरहस्यप्रकाशे प्राकाशि ॥ ९१ ॥

एतत्प्राप्तौ मुख्यं कारणमाहुः ।

**इति श्रीवल्लभाचार्यचरणाब्जकृपाभरात् ।**
**प्राप्यते नान्यथा चैतद् ब्रह्मादीनां सुदुर्लभम् ॥ ९२ ॥**

इति श्रीवल्लभाचार्येत्यादि * । आचार्यवान् पुरुषो वेदेति श्रुतेः । कृष्णाऽमृताऽधरास्वादसिद्धिरत्र न संशयः इति वाक्यात् । 'सान्निध्यमात्रदत्तश्रीकृष्णप्रेमा विमुक्तिदः । रासलीलैकतात्पर्यः कृ-पयैतत्कथाप्रद' इति वाक्याच्च * ब्रह्मादीनां सुदुर्लभमिति *

न स्त्रियो व्रतसुन्दर्यः पुत्र ताः श्रुतयः किल ।
नाहं शिवश्च शेषश्च श्रीश्च ताभिः समा क्वचित् ॥
षष्टिवर्षसहस्राणि मया तप्तं तपः पुरा ।
तथापि न मया प्राप्तास्तासां वै पादरेणव इति बृहद्वामनपु-राणवाक्याल्लीलाप्रधानभक्तचरणरेणुरपि दुर्लभस्तदा श्रीकृष्णा-ऽधराऽमृतास्वादनायतिदुर्लभतरमिति भावः ॥ ९२ ॥

ज्ञानिनां मुक्तिमाहुः ।

ये तु ज्ञानैकमनिष्ठास्तेषां तु लय एव हि ।
भक्तानामेव भवति लीलाऽऽस्वादोऽतिदुर्लभः ॥ ९३ ॥

ये त्विति * ऋते ज्ञानान्न मुक्तिः । ज्ञानादेव च कैवल्यमिति । * लय एव हीति * न स पुनरावर्तत इति श्रुतेः । ननु सिद्धान्तेऽक्षरब्रह्मणा सहैक्ये भगवतोद्धारः क्रियत इति, न स इतिश्रुति विरोध इति चेन्न । अनया संसारावर्त्तनं निषिध्यते, न तु ब्रह्मातीत-पुरुषोत्तमप्राप्तिः ।

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन ।

मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यत इति भगवद्वाक्यात् । विशेषतो निरूपणं तु भाष्यावद्वन्मण्डनादौ । यत्राक्षरप्राप्तावपि न पुनरावर्तते, तत्र तदतीतप्राप्तौ तत्सम्भावनापि नेति । * भक्ताना-मेवेति *

मुक्तानामपि सिद्धानां नारायणपरायणः ॥

सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुन इति भागवतवा-क्यान्नारायणभक्तस्यातिदौर्लभ्यम् ।

नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत ।
सगुणं ब्रह्म सर्वेदं वस्तुबुद्धिर्न तेषु नः ॥
ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् ।
वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तदित्याद्युक्त्वा ॥
आनन्दमात्रमिति यद् वदन्तीह पुराविदः ।

तद्रूपं दर्शयाऽस्माकं यदि देयो वरो हि न इत्यादिबृहद्वामनपुराणे श्रुतिप्रार्थनावाक्यात् तत्परस्य पुरुषोत्तमस्य भक्तानां श्रैष्ठ्ये किमु वाच्यम् । तत्र ताभिः स्तुतो भगवान् अक्षरब्रह्मस्थं श्रीवृन्दावनश्रीयमुनाश्रीगिरिगोवर्द्धनादिलोकं, तत्रस्थितश्रीगोपिकाकदम्ब-स्थितस्वस्वरूपं दर्शयित्वा, भगवानाह, ब्रूत किं करवाणि व इति । ततः श्रुतयो नित्यसिद्धगोपिकावन्मनोरथं याचितवत्यः । ततः ।

दुर्लभो दुर्घटश्चैव युष्माकं, सुमनोरथः ।

मयाऽनुमोदितः सम्यक् सत्यो भवितुमर्हतीत्याहेति लीला-

स्वादोऽनुग्रहैकलभ्योऽतोऽतिदुर्लभो लीलास्वादो भक्तानामेव भवतीत्यर्थः । तत्रैव पुराणे ।

स्त्रियो वा पुरुषा वाऽपि भक्तिभावेन केशवम् ।

हृदिकृत्वा गतिं यान्ति श्रुतीनां नात्र संशय इतिवाक्यात् । एतत्पुराणवाक्यानि विद्वन्मण्डने प्रभुचरणैर्निरूपितानि ॥ ९३ ॥

एवं निरूप्य समाप्तिं प्रतिजानते ।

इति श्रीश्रीमदाचार्यचरणाब्जप्रसादतः ।
प्रोक्तं गिरिधरेणेदं पश्यन्तु हरिभावुकाः ॥ ९४ ॥

इति श्रीश्रीमदाचार्येत्यादि * अत्र श्रीद्वयोपादानमुभयभागस्थितस्वामिनीवाचकम् । तेन लीलास्थपुरुषोत्तमत्वमत एषां चरणाब्जप्रसादेऽयं रसः सदास्वाद्यो भवतीति बोध्यते ॥ ९४ ॥

एतद्ग्रन्थावलोकनकर्तॄणां फलमाहुः ।

सूर्योदये शीतमपैति सर्वं
मार्गावलोको जलजप्रकाशः ।
तमो निवृत्तिर्द्विजकर्मवृत्ति-
स्तथैव मार्तण्डनिबन्धबोधे ॥ ९५ ॥

इति श्रीमन्मुकुन्दरायमहजमाधुरीपरमाऽनिर्वचनीयमरसवदनतामरससुधाह्लादावगाहिश्रीमदाचार्यकृपापारमारश्रीमत्प्रभुचरणात्मजमहाराजश्रीयदुनाथकुलोद्भवगोस्वामिश्रीगोपालजनुषा श्रीगिरिधरेण विरचितः शुद्धाद्वैतमार्तण्डः समाप्तिमफाणीत् ।

---

सूर्योदय इत्यादि * । * तथैवेति * शीतस्य जाड्यरूपत्वेन जाड्यं गच्छति । निजाचार्यप्रगटितमार्गज्ञानम् । भक्तहृदयाब्जप्रकाशः । तमोऽज्ञानं तस्य निवृत्तिः । द्विजस्य ब्राह्मणादेः सूर्योदये सन्ध्यावन्दनादिकर्मसु यथा वृत्तिः प्रवृत्तिस्तथा ब्रह्मसम्बन्धिनः, कर्मास्यैकं तस्य देवस्य सेवेति वचनाद् भगवत्सेवारूपकर्मणि प्रवृत्तिः ।

आत्मनिवेदिनामेव भगवत्सेवायामधिकारः। आत्मनिवेदिनो हि भगवत्सेवार्हा, नेतरे। गायत्र्युपदेशजसंस्कारवदिति श्रीप्रभुचरणाः। तथाच गायत्र्युपदेशेन द्विजत्वमेवमात्मनिवेदनेनात्र भगवत्सेवाधिकारत्वसम्पादकद्विजत्वम्। यथा जन्म ब्राह्मणकुले, तदनु गायत्र्युपदेशे कर्माधिकार, एवं शरणमन्त्रोपदेशे वैष्णवत्वं, तदन्वात्मनिवेदने सेवाधिकार इति भावः। निबन्धो * ग्रन्थः॥ ९५॥

इति श्रीयदुनाथानां कुलचूडामणेर्गुरोः।
श्रीमद्गिरिधरस्याङ्घ्रिसरोरुहपरागलिट्॥ १॥
रामकृष्णः स्वबोधाय व्यरचत् तत्कृपालवात्।
शुद्धाद्वैताख्यसिद्धान्तमार्तण्डस्य प्रकाशकम्॥ २॥
यदिदं सदसद्वापि प्रोक्तं धाष्ट्र्यान्मयात्र हि।
तत्र श्रीवल्लभाचार्याः कृपयन्तु निजेश्वराः॥ ३॥

इति श्रीमदखण्डपाण्डिताडम्बरखण्डनप्रचण्डवचनमरीचिश्रीमदाचार्याऽऽत्मजश्रीमत्प्रभुचरणात्मजश्रीमहाराजश्रीयदुनाथकुलकमलप्रकाशकरश्रीमद्गोपालात्मजश्रीमद्गिरिधरचरणकमलमकरन्दमधुपायमाननेतोपनामकरामकृष्णभट्टविरचितः शुद्धाऽद्वैतमार्तण्डप्रकाशः समाप्तिमगमत्।

श्रीगिरिधारी तनोतु मङ्गलानि ।

# प्रमेयरत्नार्णवः ।

श्रीबालकृष्णभट्टविरचितः ।

---

गोपीनूतनरूपयौवनमहामाधुर्यलाभोन्मदं
वृन्दाकाननिर्मितोज्ज्वलमयस्वच्छन्दरासोत्सवम् ।
श्रीमद्वल्लभविट्ठलप्रकटितप्रेमाख्यभक्तिप्रियं
वेदान्तोक्तरसात्मकं प्रभुमहं गोवर्द्धनेशं भजे ॥ १ ॥

नन्दाङ्गनालालितवक्त्रचन्द्रो
विधीशदुष्प्रापपदारविन्दः ।
विराजतां मूर्द्धनि भक्तिगम्यः
श्रीबालकृष्णः कुलदैवतं मे ॥ २ ॥

आनन्दमूर्त्तिं श्रुतिमूर्द्धसिद्धं
श्रीकृष्णमप्राकृतधर्मयुक्तम् ।
यः प्रापयद्दैवजनान् स्वपुष्ट्या
श्रीवल्लभं तं प्रभुमाश्रयामि ॥ ३ ॥

वेदान्तसिद्धं पुरुषोत्तमस्य
स्फुटीकृतं येन रसात्मकत्वम् ।
गोपाङ्गनाप्रेमनिमग्नचित्तं
श्रीविट्ठलं तं प्रणमामि भक्त्यै ॥ ४ ॥

अथ सुबोधिनीनिबन्धभाष्यविद्वन्मण्डनादिषु स्थितानि प्रमेयानि रत्नानीव सञ्चिनोमि । तत्र भगवद्भजनोपयोगितया प्रपञ्चस्वरूपज्ञानस्य निबन्धोक्तरीत्या प्रथमं तदेव विविच्यते । स आत्मान९ स्वयमकुरुत, स हैतावानास, स वै सर्वमिदं जगत्, इदं सर्वं यदयमात्मा, आत्मैवेदं सर्वं, स सर्वं भवति, पुरुष एवेद९ सर्वमित्यादिश्रुतिभिर्ब्रह्मात्मकः प्रपञ्चो ब्रह्मकार्यं इति सिद्धान्तः । अविकृतपरिणामवादस्वीकारात् । तथोपपादितं भाष्यकारैः, आत्मकृतेः परि-

णामादित्यत्र। अतो न मायिको, न वा भगवद्भिन्नः, किं तु सत्यत्वादाविर्भावतिरोभावशाली, नोत्पत्तिविनाशवान्। नासतो विद्यते भावो नाभावो विद्यते सत इति वाक्यात्। एवञ्च प्रागभावचतुष्टयमपि नात्रेति ज्ञेयम्। ननु प्रपञ्चस्य ब्रह्माभिन्नत्वेऽपि प्रापञ्चिकघटपटादीनां घटः पटोनेत्यादिप्रतीतिसिद्धोऽन्योन्याभावो दुर्निवारः। अन्यथा घटेनावरणरूपं पटकार्यं स्यादिति चेन्न। बहु स्यामितिश्रुतिसिद्धयेच्छया घटे पटत्वादीनां सर्वेषामेव तिरोभावात्। एकस्य घटत्वस्यैव घटे आविर्भावान्न कार्यान्तरसङ्करः। एवं सति सर्वत्र सर्वे ब्रह्मधर्माः सन्तोऽपि तत्तद्व्यक्तौ तत्तत्कार्यकर्तृत्वस्य भगवता नियमितत्वान्न कार्यान्तरं कर्त्तुं समर्था भवन्ति। अतः प्रमाणसिद्धाभ्यामाविर्भावतिरोभावाभ्यां सर्वकार्यसिद्धौ, नाऽन्योन्याभावोऽङ्गीकर्तव्यः। सर्वं सर्वमयमिति तापनीयश्रुतेः। अत एव, तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेत्यादावुक्तः सर्वभावो युज्यते।

एवमन्योऽन्याभावे निराकृते पदार्थमात्रस्य सर्वरूपत्वेनात्यन्ताभावोऽपि दूरीकृतो ज्ञेयः। तथाहि भूतले घटो नास्तीत्यत्र हि घटानुपलम्भेऽपि तद्भूतले वस्त्वन्तरस्य तृणादेराकाशस्य वा विद्यमानत्वात् तृणादिना आकाशेन वा घटस्यापि सत्त्वान्नात्यन्ताभावः।

अतः सर्वस्य सर्वरूपत्वात् सर्वस्य सर्वत्र विद्यमानत्वाच्च सर्वस्य ब्रह्मत्वमिति शुद्धो ब्रह्मवादः। कारणरूपस्य ब्रह्मणः कार्यरूपेणाविर्भावात् तत्प्रयुक्तं कार्यत्वं निखिलप्रपञ्चे, आत्मकृतेः परिणामात्, पटवच्चेति सूत्राभ्याम्। एतदुक्तं निबन्धीयसर्वनिर्णयप्रकरणे, प्रपञ्चभावो भगवत्येव लीनः प्रकटीभवतीति। अवान्तरकार्येषु घटपटादिषु त्वयं प्रकारः। भगवदिच्छया कारणरूपायां मृदि विद्यमानस्य भगवद्रूपघटस्याविर्भावः। एवं सति यस्मिन् भगवद्रूपे रूपान्तरस्याविर्भावस्तत्कारणम्। यथा मृत्। यस्य प्राकट्यं तत् कार्यं, यथा घट इति कार्यकारणव्यवस्था बोध्या। तथोक्तं निबन्धे, मृदादि भगवद्रूपं घटाद्याकारसंयुतमिति। अतः सर्वं खल्विदं ब्रह्मेति श्रुत्युक्तं ब्रह्मात्मकत्वं निराबाधमेव। 'मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः। अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसा' इति भा-

गवतोपबृंहणाच्च । परन्तु व्यामोहिका माया जीवं व्यामोहयित्वा तदीयबुद्धौ प्रापञ्चिकसद्वस्तुसदृशं मायिकं पदार्थमुत्पाद्य पुरःस्थित-विषये प्रक्षिपति । तदा पदार्थग्रहणे तस्यापि ग्रहणात् तद्विशिष्टज्ञानं भ्रमात्मकं भवति । तथा सति वस्तुग्रहे मायिकधर्माणामपि ग्रहणाद्, 'यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः । नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् । देहं मनोमात्रमिमं गृहीत्वा, त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो मायान्तराऽऽपतति नाद्यपवर्गयोर्यत्, स्वप्नाभमस्तधिषणं पुरुदुःखदुःखमित्यादिवाक्यानि सावकाशानि भवन्ति । इमानि तादृक्प्रतीतिमूलकानि प्रमाणान्यवलम्ब्य विवर्त्तादिवादानां प्रवृत्तिः । पुराणादौ तादृशवाङ्मूलमायिकत्वोक्तिर्वैराग्यार्थमुपयुज्यत इति व्यवस्थापितं तत्त्वदीपे । अतः प्रतीतिरेव मुग्धानां मायिकी, न वस्तुनि कश्चिद्दोषः स्वाभाविकः । अत एव ब्रह्माणं प्रति भगवतोक्तम् । 'ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथा भासो यथा तम' इति । एतद्व्याख्याने सुबोधिन्यामुक्तं, तया व्यामोहिता बुद्धिः पदार्थानन्यथा मन्यते, न तु पदार्था अन्यथा भवन्तीति । अग्रे चोक्तं, प्रमाणभूतो वेदः सर्वं खल्विदं ब्रह्मेत्याह । ब्रह्मविदां प्रतीतिरपि तथा । भ्रान्तप्रतीतेस्तु नार्थनियामकत्वम् । अन्यथा भ्रमदृष्ट्या गृहीतं जगद् भ्रमरूपमेव स्यात् । अतो विषयता काचित् स्वीकर्त्तव्या । यया दृष्टिर्निर्विषया स्यादिति । एवमनुपपाद्य स्पष्टीकर्तुं पुनः फलितमुक्तं, विषयता मायाजन्या, विषयो भगवानिति । एवं सति अब्रह्मविदां विषये विषयता च प्रतीयते इत्युक्तं, भवति । यथा भ्राम्यतः पुरुषस्य, घटो भ्राम्यतीति प्रत्यक्षे घटगताऽऽकृत्यादिर्वस्तुभूता प्रतीयते । भ्रमणं तु विषयतारूपम् । विषयरूपं भगवदात्मकं वस्तुभूतम् । यत् पुनस्तत्रैवोत्पत्तिविनाशकुत्सितत्वान्योन्याभावादि प्रतीयते तद्विषयतारूपं भ्रमणवन्मायिकं भासते । तथा घटपटादिरूपं जगत् प्रतीयते, न तु मायिकं बोध्यम् । इदमेव विविच्य सुबोधिन्याम्, ऋतेऽर्थं यत् प्रतीयेतेत्यस्यैव व्याख्याने उक्तम् । अतो विषयताजनितं ज्ञानं भ्रान्तम् । विषयजनितं प्रमेतीति । विषयता च द्विधा सुबोधिन्यां विवृता । सा च विषयता द्विधा । आच्छादिकैका । अन्यथाप्रतीतिहेतुश्चापरेत्यारभ्य तस्माद्दर्पणे मुखजननवत् तेजोऽभावेऽन्धकारजननवन्मायामोहितपुरुषबुद्धा-

वपि विषयताद्वयं जनयतीत्यर्थ इत्यन्तेन ग्रन्थेन। विषयताद्वयं कर्मभूतं माया जनयतीति फक्किकार्थः । पुनर्विषयताद्वयस्यापि स्वरूपं निगमयितुमग्रे भणितम् । तत्रैका ब्रह्मरूपतां न प्रकाशयति। एका तु जगद्रूपा विषयतेति। इह ब्रह्मरूपतां न प्रकाशयतीत्युक्त्या, ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनीत्यत्र,अर्थो न प्रतीयत इति यदुक्तं तदुपपादितम् । एका तु जगद्रूपा विषयतेत्युक्त्या, अर्थम् ऋते यत् प्रतीयेतेति पूर्वं यदुक्तं तत् समर्थितम्। जगद्रूपा विषयता जगदिव सत्यमिव रूपं यस्याः सा जगद्रूपेति समासो ज्ञेयः । एतदेव, यथा भासो यथा तम इति दृष्टान्तेन मूले विवेचितम्। नच जगद्रूपा विषयतेत्युक्त्या दृश्यमानस्य जगतो विषयतात्वं स्वीक्रियतामिति वाच्यम्। विषयो भगवान् विषयता मायाजन्येत्यनेन विषयरूपस्य जगतो विषयतायाः पृथक्त्वस्वीकारात् । अन्यथा ब्रह्मणो विषयत्वस्य वक्तुमशक्यत्वाज्जगतश्च विषयतारूपत्वाङ्गीकाराद्विषयो भगवानित्युक्तिरेव बाधिता स्यात् । अतो जगद्रूपा विषयतेत्यस्याऽस्मदुक्त एवार्थो ज्ञेयः । प्रापञ्चिकनीलवस्तुसदृशं विषयतारूपं नीलं तमः प्रतीयते । इयमेव जगद्रूपा विषयता।

इदं तु विशिष्य ज्ञेयम् । माया हि कुत्रचिद्विषयतारूपधर्मं सृजति। कुत्रचिद्धर्मिणं विषयतारूपम्। भ्रमरिकादृष्ट्या गृहीते घटे भ्रमणं विषयतारूपम्। तेजोऽभावे तु धर्मी विषयतारूपोऽन्धकारः। एवमुभयविधा विषयता जगत्समानाकारा। अत एव जगद्रूपेत्युच्यते। एवञ्च विषयतया पदार्थानामन्यथाभानं, न तु पदार्था अन्यथेति निष्कर्षः । यतो विषयताद्वयमाच्छादकाऽन्यथाप्रतीतिहेतुरूपं ब्रह्मज्ञानेन नाश्यते । तदुक्तं सुबोधिन्यामत्रैव। तदुभयव्यावृत्त्यर्थं प्रमाणानीति भाव इति।

अयं प्रपञ्चोऽधिकारभेदेन त्रिधा भासते। तत्र ब्रह्मभूतानां ब्रह्मात्मक एव शुद्धो भासते। यथा यस्मिन् क्षणे स एव शुक्लो गृह्यते तद्वत्। शास्त्रोत्पन्नज्ञानिनां तु ब्रह्मधर्ममायाधर्मयुक्तस्तत्तद्धर्मसत्यत्वमिथ्यात्वविवेकपूर्वकं भासते। यथा पटस्वरूपौपाधिकहरितत्वयुक्तपटे गृहीतेऽपि पटगताऽऽकृत्यादीनां सत्यत्वं, हरितताया मायिकत्वं बुध्यते तद्वत्। अविवेकिनां तु ब्रह्मधर्ममायाधर्मयुक्तस्तत्तद्धर्माणामेकरूपज्ञानपुरःसरं भासते । यथा हरितकाचोपनेत्रयुतचक्षुषा

चालेन गृहीतः पटस्तद्गताऽऽकृत्यादेरौपाधिकहरितत्वादेश्च सत्यत्वावबोधपूर्वकं भासते तथा। एवं सति भान एव भेदो, न स्वरूपे। अतः प्रपञ्चस्य ब्रह्माभिन्नत्वात् सत्यत्वमङ्गीकार्यं श्रुतिशरणैः। ये पुनरुत्पत्तिविनाशकुत्सितत्वभेदादयो धर्माः प्रतीयन्ते, ते मायिका इति सुधीभिराकलनीयम्।

भगवन्मूर्त्यादौ तु भिन्नः प्रकारः। तथाहि। भगवन्मूर्तिं पश्यतो भक्तिरहितस्य बुद्धौ माया विषयतां सृजति, न तु भगवन्मूर्तौ विषयतां प्रक्षिपति। तत्र भगवद्गुणानामभिव्यक्ततया मायायाः प्रक्षेपसामर्थ्याभावात्। किं तु तादृग्द्रष्टुर्बुद्धावावरणस्य विद्यमानत्वाद्भगवन्मूर्तावन्यथा भानम्। वस्तुतस्तु तत्र भगवत्त्वं निर्दुष्टमेव। अत एव, विष्णोर्वा वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिरित्यादिवाक्यैरन्यथाबुद्धेर्निन्दितत्वं श्रूयते। 'शिलाबुद्धिर्न कार्या च तत्र नारद कर्हिचित्। ज्ञानानन्दात्मको विष्णुर्यत्र तिष्ठत्यचिन्त्यकृद्, इत्यादिवचोभिस्तत्र भगवदावेशकथनात् प्रपञ्चवैलक्षण्यमङ्गीकार्यम्। मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनमित्येकादशवाक्यात्। पूजनं प्रतिमायां तु उत्तमं परिकीर्तितमिति कालनिर्णयदीपिकास्थविष्णुधर्मवाक्याच्च। निबन्धे च, 'तदभावे स्वयं वापि मूर्तिं कृत्वा हरेः क्वचित्। परिचर्यां सदा कुर्यात् तद्रूपं तत्र च स्थितम्' इत्यस्य व्याख्याने, वस्तुविचारे सर्वस्यापि भगवद्रूपत्वाद्विशेषस्त्वयम्। एनम् उद्धरिष्यामीति, तदा मृदादेः प्रादुर्भूत इत्यादिना प्रपञ्चवैलक्षण्यस्योपपादितत्वाच्च। अत एव महता प्रबन्धेन मूर्तिपूजनं श्रीमद्भागवतैकादशस्कन्धे भगवता श्रीमदुद्धवं प्रत्युक्तमिति दिक्।

एवमेव यमुनागङ्गादिजलेषु तुलसीगोपीचन्दनादिषु तादृशभक्तेषु साधारणवस्तुवैशिष्ट्यमाप्तवाक्यबलेनैवादरणीयम्। तत्तत्सेवकैस्तत्र तत्रोद्धृत्युपयोगिधर्माणामुपलभ्यमानत्वात्। अत एव भगवन्मूर्त्यादिसम्बन्धाद् बहूनां भगवत्प्राप्तिः पुराणादौ स्मर्यते। वाचनिके शास्त्रे वाचनिक्येव व्यवस्थेति, न शुष्कतर्कैर्भ्रमितव्यमित्यलं लेखेन।

ननु सर्वस्य ब्रह्मात्मकत्वे सर्वान्तःपातिनो देहस्यापि तथात्वेन तत्र जायमानाया आत्मबुद्धेः प्रमात्वापातः। नचेष्टापत्तिः। देहात्म-

बुद्धेः श्रीमद्भागवतादौ निन्दितत्वादिति चेत् । सत्यम् । अजातब्रह्मज्ञानस्य देहं विकारवत्त्वेन पश्यतो मायामोहवशाज्जाताया देहात्मबुद्धेरेव सर्वशास्त्रेषु निन्दा । सर्वत्र ब्रह्मत्वेन पश्यतः स्वदेहेऽपि तथा भानाद्भवन्ती आत्मबुद्धिः प्रमारूपैव । तथाह भगवान् भाष्यकारः, आत्मकृतेरित्यत्र, देहात्मबुद्धिस्तु सत्यां विकारबुद्धौ दोष इति ।

ननु, त्वय्यद्वितीये भगवन्नयं भ्रम इत्यादिवाक्यानां का गतिरिति चेत् । अहन्ताममतात्मकस्य संसारस्य मिथ्याभूतस्यैतादृशवाक्यविषयत्वमिति बोद्धव्यम् । तथाच प्रपञ्चो ब्रह्मात्मकः । संसारस्तु अहन्ताममतात्मको मिथ्याभूत एव । एतच्च सुष्ठूपपादितं निबन्धादिष्विति विशेषजिज्ञासायां ततोऽवधेयमिति दिक् ।

इति श्रीमद्गोवर्द्धनधरश्रीवल्लभाचार्यश्रीविट्ठलेश्वरचरणानुचरसेवकेन लालूभट्टोपनामबालकृष्णेन कृते प्रमेयरत्नार्णवे प्रपञ्चविवेकः सम्पूर्णः ॥ १ ॥

अथ जीवस्वरूपं विचार्यते । तत्र तत्त्वमसि श्वेतकेतो, एषोऽणुरात्मा चेतसा वेदितव्यः, ममैवांऽशो जीवलोके, नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्, न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपीति श्रुतिगीताव्याससूत्रसमाधिभाषावाक्यैर्ब्रह्माभिन्नोऽणुर्ब्रह्मांऽशो जीव इति राद्धान्तः । तस्य चावस्थात्रयम् । शुद्धसंसारिमुक्तभेदात् । तथाहि कारणभूतादक्षरब्रह्मणः सकाशाद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्तीति श्रुतेः सच्चिदानन्दात्मकोऽणुरंशो निःसरति । व्युच्चरणानन्तरं कारणरूपाऽक्षरगतस्य, विशुद्धसत्त्वं तव धाम शान्तमित्यादिप्रमाणसिद्धस्य भगवद्धर्मात्मकस्य विशुद्धसत्त्वस्यांशभूतेन तादृक्सत्त्वेन भगवदिच्छया प्रबलीकृतेनानन्दांशस्तिरोभवति । तदा निरुपाधिकोऽणुरूपोऽक्षरांशश्चित्प्रधानस्तिरोहितानन्दो जीवशब्दवाच्यो भवति । तदुक्तं वेदस्तुतिसुबोधिन्यां, स्वकृतपुरेष्वमीष्वित्यत्र, जीवो नाम भगवतश्चिदंश इति । स्फुटीकृतं च भाष्ये, आनन्दांशस्तु पूर्वमेव तिरोहितो येन जीवभाव इति । अत्र पूर्वमेवेत्यस्य भगवदैश्वर्याद्यंशभूतैश्वर्यादितिरोभावात् पूर्वमित्यर्थः । निबन्धे च, ततः साकारा भगवद्रूपा अपि उच्चनीचभावेच्छया निर्गता इति निराकारा जाता इत्युक्तम् । इहाकारशब्देनानन्दाकार उच्यते । आनन्दो ब्रह्मवादे आकारसमर्पक इति तत्र निर्णयात् ।

ननु व्यापकाद् ब्रह्मणो व्युच्चरणं न सम्भवतीति चेन्न । व्यापकत्वेऽपि विरुद्धधर्माश्रयतया, व्युच्चरन्तीतिश्रुतिसिद्धस्य व्युच्चरणस्याङ्गीकारात् । एवं सति व्युच्चरणोपादानभूताद् ब्रह्मणो व्युच्चरतो ब्रह्मभूतस्य ब्रह्मभूते प्रदेशे ब्रह्मभूतं व्युच्चरणमित्युक्ते न कश्चिद्दोषः । सर्वं खल्विदं ब्रह्मेति श्रुतेः । तथैवोक्तं भगवता, 'यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा । स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वर' इति । अतो व्युच्चरणे सत्यानन्दांशतिरोधानाज्जीवत्वम् । व्युच्चरणोत्तरम्, आनन्दांशतिरोधाने सत्यविद्यासम्बन्धात् पूर्ववर्तिन्यामवस्थायां शुद्धजीव इति व्यवहारः । शुद्धसत्त्वव्यवस्थितिरिति लक्ष्मीतन्त्रात् । जीवे शुद्धत्वं त्वविद्यासम्बन्धराहित्यम् । ततोऽस्मिञ्जीवरूपे भगवदंशे भगवदैश्वर्यादिषड्गुणांशभूतानामैश्वर्यादीनां हरीच्छया तिरोभावः । पराभिध्यानात्तु तिरोहितं, ततो ह्यस्य बन्धविपर्ययाविति तत्त्वसूत्रात् । तदा तेषां मध्ये केषुचिज्जीवेषु रमणेच्छया विचारि-

तस्य बहुत्वभवनस्य सिद्धये उच्चभावेच्छाविषयीभूतं मुक्त्यधिकाररूपं सूक्ष्मसद्वासनाविशिष्टं दैवत्वं सम्पादयति भगवान्। तदैव जीवा मुक्तियोग्या भवन्ति। दैवी सम्पद्विमोक्षायेति भगवद्वाक्यात्। ततो ह्यविद्यासम्बन्धाद् बन्धः। बन्धोऽस्याऽविद्ययानादिरिति वाक्यात्। अनादित्वं तु कार्यान्तरापेक्षया। अमरेष्वमरत्ववत्। तदुपपादितं विद्वन्मण्डने। ततो देहेन्द्रियान्तःकरणाध्यासाः स्वरूपविस्मृतिश्चे-त्यविद्यायाः पञ्चपर्वाणि। तैर्बद्धो दुःखितः। अस्य जीवसंसार उच्यत इति निबन्धात्। उच्यते, न तु जायते। अभिमत्यात्मकत्वात्। ततः सूक्ष्मस्थूलदेहसम्बन्धात् संसारिधर्माञ्जन्ममरणादीन् अनुभवन् भ-गवत्कृपया सत्सङ्गादि लब्ध्वा पञ्चपर्वात्मिकां विद्यां प्राप्य परमान-न्दलक्षणां मुक्तिं लभते।

वैराग्यं सांख्ययोगौ च तपो भक्तिश्च केशवे।

पञ्चपर्वेति विद्येयं यया विद्वान् हरिं विशेदितिवाक्यात्। तत्र यावत् पञ्चपर्वात्मिकां विद्यां प्राप्नुयात्। तावत् संसारीति व्यवहा-रः। तदग्रे मुक्त इति शास्त्रीयो व्यवहारः।

स च मुक्तजीवो द्विविधः। जीवन्मुक्तो मुक्तश्चेति। तत्र सनकादयो गताविद्यास्ते जीवन्मुक्ता उच्यन्ते। ये तु व्यापिवैकुण्ठेतर-भगवल्लोकवासिनस्ते मुक्ता इत्युच्यन्ते। ततः परमकृपया परममुक्ति-स्तत्र तु शुद्धब्रह्मत्वमेवेति निर्णयः। केचिदुत्तमा दैवास्तु सत्सङ्गादि प्राप्य मार्गरुचिजन्यश्रवणादिसमुद्भूतस्वतन्त्रभक्त्या फलरूपया नि-त्यलीलायां प्रविशन्ति। स तेषां मोक्षः। ये तु दैवजीवेभ्यो व्यतिरि-क्तास्तेषां षड्गुणतिरोधानानन्तरम्, अविद्यासम्बन्धे नीचभावेच्छा-विषयीभूतं मुक्तिप्रतिबन्धकमसद्वासनाविशिष्टमासुरत्वं सम्पादयति भगवान्। तदा ते आसुरजीवा उच्यन्ते। ते ह्यसद्वासनावशात् तादृशं स्थूलदेहं प्राप्य निन्दितकर्मनिरताः सन्तो नीचयोनिगा भव-न्ति। ते सर्वदा संसारिण एव। 'क्षिपाम्यजस्रमशुभानासुरीष्वेव यो-निषु। आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमिति' वाक्यात्। तेषां तु तदैवाऽवि-द्याकार्यनाशो यदा भगवानात्मरतीच्छुर्भवति। तदा भगवानविद्या-कार्यं संसारं सर्वत्र स्थितं स्वयमेव जीवकृतसाधनानपेक्षो नाशयति। तदा तेषामासुराणां सर्वदोषाणां नाशात् पुनः शुद्धजीवत्वं भवति।

तत्र सर्वत्र जडजीवात्मकप्रपञ्चे तिरोधानकृतवैजात्यनाशार्थं चिदानन्दौ प्रकटयति । तदा पूर्वोक्तजीवेष्वंशद्वयप्राकट्यम् । ततः प्रपञ्चो भगवति लीयते । तदैक एव भगवान् । अक्षरस्यापि पुरुषोत्तमाभिन्नतया स्थितिः । यो विशिष्येत सोऽस्म्यहमिति भगवद्वाक्यात् । भवानेकः शिष्यते शेषसंज्ञ इति श्रीदेवकीवाक्याच्च । सुबोधिन्यां तथैव व्याख्यातत्वाच्च । अत एव, कृष्णस्यात्मरतौ त्वस्य लयः सर्वसुखावह इति निबन्धे उक्तम् ।

इदमत्र ज्ञेयम् । जीवा द्विविधा दैवा आसुराश्च । तत्र दैवा अपि द्विविधा मर्यादामार्गीयाः पुष्टिमार्गीयाश्च । तस्माज्जीवाः पुष्टिमार्गे भिन्ना एव न संशय इति पुष्टिप्रवाहमर्यादानिरूपणग्रन्थात् । भेदकस्तु बीजरूपो निरुपाधिको भावः । स च भगवता अविद्यासम्बन्धात् पूर्वं दैवत्वसम्पादनानन्तरं मर्यादामार्गीयजीवेभ्यो भेत्तुं विशेषानुग्रहेच्छया पुष्टिमार्गीयफलं प्रापयिष्यत्येवम् । स तूत्तरत्राधिकारविवेके विवेचयिष्यते । मर्यादामार्गीया जीवास्तु ज्ञानभक्तिकर्मयोगादिभिः सच्छास्त्रप्रतिपादितैर्यथायथं मिलिता बहुविधा ज्ञेयाः । तेऽपि मुक्तावधिकारिणः । अतो मुक्तिः पुष्टिमार्गीयाणां मर्यादामार्गीयाणां च । अत एवेतरौ भिन्नौ सान्तौ मोक्षप्रवेशत इत्याचार्यवाक्यात् । परं तु मुक्तौ यो भेदः स उत्तरत्र प्रपञ्चयिष्यते ।

नन्विदं सर्वं जीवस्याणुत्वे सम्भवेत् । तत्तु सर्वदेहव्यापिचैतन्योपलब्ध्यन्यथानुपपत्तिसिद्धेन व्यापकत्वेन बाधितमिति चेन्न । अविरोधश्चन्दनवदिति तत्त्वसूत्रे चन्दनदृष्टान्तेनाणुत्वेऽपि सर्वशरीरव्यापिचैतन्योपलब्धेः साधितत्वात् । ननु चन्दनस्यैकदेशवर्तित्वं प्रत्यक्षेण गृहीत्वा तच्छैत्यं सकलशरीरे लभमानस्तदुबलेनैकदेशस्थस्यापि चन्दनस्य तादृक् सामर्थ्यं कल्पयति । जीवे तु शरीरैकदेशवर्त्तित्वस्य प्रत्यक्षेणानिर्द्धारादु दृष्टान्तवैषम्येण तादृशसामर्थ्यसिद्ध्यभावान्न पूर्वोक्तसमाहितिरिति चेन्न । प्रमाणवर्याभ्यः, कतम आत्मा योऽयं विज्ञानमयः प्राणेषु, हृद्यन्तर्ज्योतिः पुरुषः स वा एष आत्मा, हृद्येष आत्मेत्यादिश्रुतिभ्य एकदेशस्थायित्वस्य निश्चयात् । एतदाह सूत्रकारः । अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमादूधृदि हीति । किञ्च । यथा वृक्षस्य संपुष्पितस्य दू-

राद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वातीति श्रुतेर्गन्धस्य द्रव्याधिकदेशवर्तित्वमेवं चैतन्यगुणोप्यधिकदेशवर्ती। जीवस्य शरीरैकदेशहृदयस्थायित्वेऽपि सर्वदेहे चैतन्योपलम्भो भवत्येव। तदाह सूत्रकृत्। व्यतिरेको गन्धवदिति। नच चम्पकाद्यवयवानां सूक्ष्माणां दूरदेशे प्रसृतत्वात् तत्र गन्धोपलब्धिः सुवचेति वाच्यम्। हिङ्ग्वादेरनेकचर्मपुटादिवेष्टितत्वेनावयवनिर्गमनाभावेऽपि गन्धग्रहणात्। लशुनस्पृशि करादौ बहुधा क्षालनेनावयवाऽभावेऽपि गन्धानपायाच्च। एतच्च सुष्ठूपपादितं प्रभुचरणैर्विद्वन्मण्डने। नच, स वा एष महानज आत्मेति श्रुतेर्व्यापकत्वमिति वाच्यम्। नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारादिति तत्त्वसूत्रेण ब्रह्माधिकृत्येयं श्रुतिः प्रवृत्तेति प्रदर्श्याणुत्वस्यैव साधितत्वात्।

ननु नित्यः सर्वगतः स्थाणुरचलोऽयं सनातन इति भगवद्वाक्याद् व्यापकत्वमिति चेन्न। ब्रह्म वेद ब्रह्मैव भवतीतिश्रुतेर्ब्रह्मभावे सति भगवद्धर्मावेशे जायमानस्य व्यापकत्वस्य भगवद्वाक्यविषयत्वात्। तदुक्तं निबन्धे, व्यापकत्वश्रुतिस्तस्य भगवत्त्वेन युज्यत इति। तर्हि व्यापकतायामणुत्वस्य निवृत्तेरवास्तवमणुत्वमितिचेन्न। ब्रह्मणो विरुद्धधर्माश्रयत्वेन अणुरूपेऽपि व्यापकताया अदोषात्। एतदुपपादितं निबन्धे। अण्वपि ब्रह्म व्यापकं भवति। यथा कृष्णो यशोदाक्रोडे स्थितोऽपि सर्वजगदाधारो भवतीत्यन्तेन। अतो जीवोऽणुरेव। तस्य चैतन्याख्यो गुणः सर्वदेहं व्याप्नोति। तदुक्तं नारदपञ्चरात्रे लक्ष्मीतन्त्रे त्रयोदशाध्याये।

चैतन्यमस्य धर्मो हि प्रभा भानोरिवामला।

तया स्फुरति जीवोऽसौ स्वत एवानुरूपयेति। यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्तीति श्रुतिः स्पष्टमेवांशत्वं ब्रूते। सूत्रकारोऽप्यंशो नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयत एके, इत्यनेनांशतां स्फुटं निरणयदिति पूर्वोक्तमखिलमनवद्यम्।

इति श्रीगोवर्द्धनधरश्रीवल्लभाचार्यश्रीविठ्ठलेश्वरचरणानुचरसेवकेन लालूभट्टोपनामबालकृष्णभट्टेन कृते प्रमेयरत्नार्णवे जीवविवेकः समाप्तिमगात्॥ २॥

अथ मूलरूपं विचार्यते ।

तत्र कृषिर्भूवाचकः प्रोक्तो णश्च निर्वृतिः वाचकः ।

तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ।

ॐ तत् सत् परं ब्रह्म कृष्णात्मको नित्यानन्दैकस्वरूपः सोहमों तद्गोपाल एव परं सत्यमबाधितमिति । परं ब्रह्मैतद्यो ध्यायति रसति भजतीत्यादिश्रुतेर्मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय, अक्षरादपि चोत्तम इति भगवद्वाक्याच्च श्रीकृष्णः परं ब्रह्मेति निष्कर्षः । अत एव, परं ब्रह्म तु कृष्णो हीति मुक्तावल्यां श्रीमदाचार्यैरुक्तम् । स चापाणिपादो जवनो ग्रहीता, अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतेः प्राकृतपाणिपादादिरहितः सच्चिदानन्दविग्रहः । आनन्दं ब्रह्मणो रूपं, 'सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे । नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे, सर्वतःपाणिपादं तद् इत्यादिश्रुतेरानन्दमूर्तिमजहादतिदीर्घतापम्, आनन्दमात्रकरपादमुखोदरादिरित्यादिपुराणतन्त्राभ्यामानन्दात्मककरचरणादिरूपो, निष्कलं निष्क्रियं शान्तं, सर्वकामः सर्वगन्धः, परास्य शक्तिर्विविधैव श्रूयते इत्यादिश्रुतिभिरप्राकृतधर्माधारः । तदुक्तं निबन्धे ।

सर्वाधारं वश्यमायमानन्दाकारमुत्तमम् ।

प्रापञ्चिकपदार्थानां सर्वेषां तद्विलक्षणमिति । तथाच निषेधकश्रुतीनां प्रातीतिकप्राकृतधर्मविषयत्वं, धर्मविधायकोपनिषदां त्वप्राकृतनित्यश्रौतधर्मविषयत्वमिति व्यवस्थया त्वविरोधोऽस्मत्सिद्धान्ते । यदाह भगवान् भाष्यकारः । प्रतीतं च निषेध्यं, नाप्रतीतं, न श्रुतिप्रतीतमिति । स च परमकाष्ठापन्नः पुरुषोत्तमशब्दवाच्यः कृष्णः सदा प्रकटालौकिकसर्वधर्मा नित्यसर्वलीलः । दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणमितिशुकवाक्याद्, यस्य लीला नवविधाः स शुद्धः पुरुषोत्तम इति निबन्धात् । श्रीकृष्णं परमानन्दं दशलीलायुतं सदेति स्पष्टमेव श्रीभागवतप्रकरणारम्भे निरूपितत्वाच्च ।

स हि द्विभुजचतुर्भुजादिरूपैर्बृहद्वनवृन्दावनव्यापिवैकुण्ठादिषु तत्तद्भक्तैः सह रममाणः सर्वदा विजयते ।

परिपूर्णतमः कृष्णो वैकुण्ठे गोकुले स्वयम् ।

चतुर्भुजश्च वैकुण्ठे गोकुले द्विभुजः स्वयमिति ब्रह्मवैवर्तात् ।

अत एव परमानन्दः ।रसो वै सः । एतमानन्दमयमात्मानमुपसंक्रामतीत्यादिश्रुतेः । आनन्दमयोऽभ्यासात् । पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु य इति तत्त्वसूत्रश्रीभागवतीयश्रुतिस्तुतिभ्यां च । एतच्च भाष्यसुबोधिन्योः स्फुटम् । अत एव आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तयेदिति मुक्तावल्यामुक्तम् ।

तस्यैव बहुस्यां प्रजायेयेति श्रुत्युक्तयेच्छया सकलकारणकारणभूतं रूपान्तरमाविर्भवति । तस्मिन् रूपे भगवद्धर्मात्मकसत्त्वेनाऽऽनन्दांशस्तिरोहित इव भवति । तदा तद्रूपमक्षरब्रह्मशब्दवाच्यं भवति । तदक्षरं ब्रह्म अधिकारिभेदेन द्विधा स्फुरति । तत्र भक्तानां पुरुषोत्तमधामव्यापिवैकुण्ठाद्यात्मकत्वादिधर्मवत् प्रतीयते । अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिं, यं प्राप्य न निवर्तन्ते तद्धाम परमं ममेति गीतावाक्यात् । 'दर्शयामास लोकं स्वं गोपानां तमसः परम् । सत्यं ज्ञानमनन्तं यद् ब्रह्म ज्योतिः सनातनमिति श्रीभागवताच्च । अत एवोक्तं निबन्धे । प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुद्भव इत्यादि । भक्तप्रत्यक्षविषयीभूतेऽस्मिन्नक्षररूपे केषाञ्चिद् गुणानां प्राकट्यमन्येषां भगवद्गुणानां तिरोधानमेवेति ज्ञेयम् । नच तिरोभावस्याज्ञानमूलकतया न ब्रह्मणि स इति वाच्यम् । आविर्भावतिरोभावौ शक्ती वै मुरवैरिण इति वाक्याद् भगवच्छक्तित्वात् । ननु विद्यमानस्य प्रतीत्यविषयता तिरोभावः । तथा सति सर्वज्ञे ब्रह्मणि न सम्भवस्तस्य । तदानीं जीवस्याभावात् तद्बुद्ध्यभिप्रायेणापि न वक्तुं शक्य इति चेन्न । सतः पदार्थस्य स्वकार्याकारित्वं तिरोभाव इति लक्षणात् । अत एव ब्रह्मनिष्ठस्य प्रलयकर्तृत्वादेः प्रपञ्चस्थित्यवसरे स्वकार्याकारित्वरूप एव तिरोभावोऽङ्गीक्रियते । एवं सर्वत्र बोध्यम् । सद्विषयकप्रतीत्यभावरूपस्तु तिरोभावो मायाकृतो बद्धजीवधर्म एतद्भिन्न इति दिक् ।

प्रकृतं वदामः । ज्ञानिनां तु सच्चिदानन्दत्वदेशकालापरिच्छिन्नत्वस्वयम्प्रकाशत्वगुणातीतत्वादिस्वरूपं भासते । व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवदित्यत्र भाष्येऽक्षरस्य द्वेधा स्फूर्त्तिनिरूपणात् । अतो ज्ञानिनां प्रकाशमानेऽक्षरे ब्रह्मणि सर्वेषां धर्माणां तिरोभावादेकस्यास्तिरोधानशक्तेरेव प्राकट्यान्निर्द्धर्मकमिति व्यवह्रियते । 'संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति । शब्दो न

यत्र पुरुकारकवान् क्रियार्थो माया परैत्यभिमुखे च विलज्जमाना। तद्वै पदं भगवतः परमस्य पुंसो ब्रह्मेति यद्विदुरजस्रसुखं विशोकम्' इत्यादिवाक्यात् । न तु श्रुत्युक्तधर्मशून्यम् । तथा सत्यसतः सत्ता स्यात् । विश्वतश्चक्षुरुत विश्वतोमुख इत्यादिश्रुत्युक्तधर्मस्वीकारे औपाधिकपक्षो वा स्यात् । अतो वेदोक्तधर्माणां तिरोभाव एव, न त्वभावः । अभावास्त्वस्मन्मते तिरोभावातिरिक्ता न भवन्तीति द्वितीयस्कन्धसुबोधिन्याम् । नचैवं ब्रह्मणि दुःखं नास्तीत्युक्तेर्दुःखतिरोभावस्वीकाराद् दुःखसत्तापत्तिरिति वाच्यम् । दुःखस्य मायिकत्वेन मिथ्यात्वात्तदभावस्यापि मिथ्यात्वस्वीकारात् । अत एव कैश्चिन्निर्द्धर्मवादिभिः स्थूलत्वाद्यभावानां मिथ्यात्वमङ्गीकृतम् । अन्यथा ह्यभावनिरूपितं द्वैतं स्यादिति। अतो मायिकधर्माणां भ्रान्तप्रतीतिमात्रसिद्धानां दुःखादीनां मिथ्यात्वेन तदभावस्यापि मिथ्यात्वम् । वन्ध्यासुततदभाववत् । श्रुत्युक्तधर्मप्रतियोगिका अभावास्तु तिरोभावात्मका इति विवेकः । अतस्तिरोभावस्वीकारे न कश्चिद्दोषः । तदेवं तिरोहितसर्वशक्तिकं सर्वव्यवहारातीतमेकं ब्रह्मणो रूपम् । 'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्' इतिगीतावाक्ये एतदेव स्वरूपमुक्तम् । तथाच पुरुषोत्तमशब्दवाच्यं श्रीकृष्णस्वरूपमेकम् । अक्षरं द्वितीयम् । तच्च पूर्वोक्तरीत्या द्विविधमिति ब्रह्मणो रूपत्रयं दर्शितम् । पुरुषोत्तमस्य तस्यैव सर्वनियमनादिकार्यसिद्ध्यर्थं सूर्यमण्डलादौ पृथिव्या अधिदैवादिषु स्थितं यद् रूपं तदन्तर्यामिशब्दवाच्यम् । य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृत इति श्रुतेः । भेदव्यपदेशाच्चान्य इति सूत्राच्च। य इमं च लोकं परं च लोकं सर्वाणि भूतान्यन्तरो यमयतीत्युपक्रम्य यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृत इति श्रुतेः । अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादिति सूत्राच्च । अयं पुरुषशब्देनोच्यते ।

विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः
प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ।
तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यत इति वाक्यात् ।

अयं हि सर्वेषां लीलावताराणां मत्स्यादीनां मूलम्। लीलावतारान् पुरुषस्य भूम्न इति द्वितीयस्कन्धात्। ते च पुनरवताराः क्वस्येत्यपेक्षायां, यस्तु भूमा पुरुषो ब्रह्माण्डादधिकोऽन्तर्यामिरूपो द्वितीयध्यान उक्तस्तस्यावतारा इति सुबोधिन्यां व्याख्यातत्वाच्च। द्वितीयध्यानं तु, केचित्, स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तमित्यत्रोक्तम्। एतद्व्याख्याने पुरुषाद्‌तिरिक्तं रूपमतिरेकार्थे भजन्ते। अतिरिक्तमपि पुरुषाकारं वसन्तं तृतीयपुरुषमिति सुबोधिन्यामुक्तम्। एवं सति तृतीयं सर्वभूतस्थमित्यत्रोक्तमन्तर्यामिरूपमिति सूचितम्। अत एव, यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रदित्यस्याभासे, अन्तर्यामिस्वरूपे, प्रादेशमात्रं पुरुषं वसन्तमित्यादिपद्यैर्यन्निरूपितं भगवत्स्वरूपं तस्यात्र दशावतारा उच्यन्ते इति सुबोधिन्यामुक्तम्। एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमित्यत्र एष एवान्तर्यामी पुँशब्देनोक्तः। पुंसो नारायणस्य ब्रह्माण्डमूर्तेरंशाः कलाश्चेति व्याख्याततत्वात्। अत एव, य आदित्ये तिष्ठन्नित्यारभ्य, स त आत्मान्तर्याम्यमृत इत्यत्रोक्तस्यान्तर्यामिणो नारायणत्वं स्मर्यते। 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः। केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्र' इति। अतः पुरुषोत्तमस्य रूपान्तरमन्तर्यामिसंज्ञकमेकम्। सर्वे तस्यावताराः। एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमिति वाक्यात्। अक्षरान्निर्गमनं येषामन्तर्यामिणामुक्तं ते त्वेतस्य मुख्यान्तर्यामिणोऽंशा बोध्याः। ते ह्यानन्दप्रधाना जीववत्प्रतिशरीरं भिन्ना नियतनियामकत्वधर्माणस्तत्तज्जीवमात्रनियामकाः। जडजीवान्तर्यामिष्वेकैकांशप्राकट्यादिति। तत्तु समन्वयादिति सूत्रभाष्ये एत एवोक्ताः।

अतः परं लीलावताराणां गुणावताराणां च स्वरूपं विविच्यते। तत्र, विशुद्धसत्त्वं तव धाम शान्तं, सत्त्वं यस्य प्रिया मूर्तिः, सत्त्वं विशुद्धं श्रयते भवान् स्थितावित्यादिवाक्येभ्यः प्राकृसत्त्वादितरद् भगवद्धर्मात्मकं सत्त्वमस्ति। एवं प्राकृतरजस्तमोभ्यामितरे भगवद्धर्मात्मके रजस्तमसी अपि स्तः। विशुद्धसत्त्वं तव धाम शान्तमित्यस्य सुबोधिन्यां, त्रयाणामप्यप्राकृतत्वानिरूपणात्। सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रय इत्यत्र भगवद्गुणत्वेन त्रयाणामुक्तेः। सुबोधिन्यां तथा व्याख्याततत्वाच्च। तत्र अप्राकृतसत्त्वं स्वचिकीर्षितमत्स्या-

द्याकृतिं विधाय तत्रायःपिण्डे वह्निरिवाविर्भूय तत्तत्कार्याणि करोति । अस्मिन् विशुद्धसत्त्वात्मके विग्रहे जगत्स्थितिकार्यचिकीर्षया वह्न्ययोगोलकन्यायेनाविश्य विष्णुसंज्ञां भजते । स गुणावतारो विष्णुः । अप्राकृते रजसि विग्रहभूते वह्न्ययोगोलकन्यायेन प्रविश्य ब्रह्मसंज्ञां भजते । अप्राकृते तमसि विग्रहभूते वह्न्ययोगोलकन्यायेन प्रविष्टः शिवशब्दवाच्यो भवति । एते त्रयो गुणावतारा अप्राकृतदेहा अपि प्राकृतसत्त्वरजस्तमसां, सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष इत्यादिप्रमाणसिद्धानां पूर्वोक्तभगवद्धर्मसत्त्वादिभ्यो भिन्नानां नियामकतया सगुणा उच्यन्ते । अत एवैते पुराणादिषु परब्रह्मधर्मवत्त्वेन स्तूयन्ते । अंशिना कृष्णेनाभेदात् । अत्रैतावान् विशेषः । त्रयाणां गुणावतारत्वेऽपि विष्णौ चतुर्भुजाद्याकाराणां पीताम्बरवनमालादीनां पुरुषोत्तमधर्माणां बहूनां प्रकटत्वेन ब्रह्मशिवापेक्षया उत्कृष्टत्वं ज्ञेयम् । अत एव, श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युरिति श्रीभागवते उक्तम् ।

एतावता ग्रन्थेन सिद्धमेतत् । मूलरूपस्य चत्वारि रूपाणि । तत्रैकं पुरुषोत्तमस्वरूपं श्रीकृष्णशब्दवाच्यम् । एकम् अक्षरं स्वरूपम् । तच्च पूर्वोक्तरीत्या द्विविधम् । एकमन्तर्यामिरूपम् । एवं चातुर्विध्यं ज्ञेयम् । इदमलौकिकं प्रमेयं वेदान्तप्रतिपाद्यं भगवत्कृपैकलभ्यं यथाबुद्धि मया निरूपितम् । विशेषजिज्ञासायां तु भाष्यसुबोधिनीनिबन्धविद्वन्मण्डनादयो ग्रन्था अवलोकनीया इत्यलं लेखेन ।

इति श्रीमद्गोवर्द्धनधरश्रीवल्लभाचार्यश्रीविठ्ठलेश्वरचरणानुचरसेवकेन लालूभट्टोपनामबालकृष्णेन कृते प्रमेयरत्नार्णवे मूलरूपविवेकः सम्पूर्णः ॥ ३ ॥

अथेदं विचार्यते। का पुष्टिः, कश्च पुष्टिमार्ग इति।

तत्र, पोषणं तदनुग्रह इति शुकवाक्यात्, कृष्णानुग्रहरूपा हि पुष्टिः कालादिबाधिकेति निबन्धोक्तत्वाच्चानुग्रहरूपो भगवद्धर्मः पुष्टिः। सा च विलक्षणा लौकिकालौकिकफलसाधिका। अतोऽधिकारिविशेषे निःसाधने श्लाघ्यफलं जनयन्ती तेनैवानुमीयते। तदुक्तं निबन्धे, अनुग्रहो लोकसिद्धो गूढभावान्निरूपित इति। अर्थस्तु गूढभावादनुग्रहस्य गूढत्वाल्लोकसिद्धो लोके उत्तमफलजननेन प्रकटीभूतोऽनुग्रहो निरूपितः षष्ठस्कन्धे वर्णितः। तत्कार्यं विवेचितमजामिलादिषु। यतो निन्दितकर्मनिरतः सङ्केतितभगवन्नाम्ना मोचितः। विश्वरूपदधीचिवृत्राणां कर्मिज्ञानिभक्तानां हन्ताऽनिष्टफलभोगयोग्यः शक्रोऽपि पुष्ट्या रक्षितः। दितिगर्भो वज्रहतोऽपि न मृतः। प्रत्युत बहुत्वं सम्पन्नम्। अत एवोक्तम्,

एवमिन्द्रे महापुष्टिः सर्वबाधा निरूपिता।
सर्वबाधकरूपा हि दैत्ये पुष्टिरथोच्यत, इति

महापुष्टित्वं तु बलवत्प्रतिबन्धनिवृत्तिपूर्वकस्वपादावाप्तिसाधकत्वम्। सर्वबाधेत्यत्र सर्वशब्देन कालकर्मस्वभावा ग्राह्याः। तदिह कुत्सितकर्मणामनिष्टफलाजनकत्वेन तद्बाध इन्द्रे स्पष्टः। दितिगर्भप्रसङ्गे वज्रप्रहारस्य प्राणवियोगसाधकत्वस्वभावबाधो ज्ञेयः। 'न ममार दितेर्गर्भः श्रीनिवासानुकम्पया। बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान्' इतिवाक्यात्। एवमन्यत्रापि बोध्यम्।

इयं च पुष्टिश्चतुर्विधपुमर्थान् साधयति। अत एव सुबोधिन्यामुक्तम्, सहस्रार्जुनो भगवदंशः पुष्ट्या राजा बभूवेति। निबन्धे देवहूतिमुक्तिश्च पुष्टिकारणिका निरूपिता। योगादीनां तु व्यापारत्वमुक्तमेव, अजामिलादिषु नामादीनामिव। तदुक्तं निबन्धे, नामाध्यानार्चनादिकं, पुरस्कृत्य हरेर्वीर्यं नामादिषु निरूप्यत इति। इदं सामान्यानुग्रहस्वरूपम्। पुष्टिविशेषस्तु केवलं भगवत्स्वरूपफलिकां भक्तिं साधयति। अतस्तज्जन्या भक्तिः पुष्टिभक्तिरित्युच्यते। तदुक्तं सिद्धान्तमुक्तावल्याम्। अनुग्रहः पुष्टिमार्गे नियामक इति स्थितिरिति। पुष्टिमार्गे पुष्टिभक्तिमार्गे इत्यर्थः। तदनुग्रहैकलभ्यां भक्तिं च नुमस्तदीयांश्चेति भक्तिहेतुनिर्णयेऽपि। अत एव, भक्त्या कार्यरूपया पुष्टिविशेषोऽनुमीयते। तदुक्तं पुष्टिप्रवाह-

मर्यादानिरूपणे । भक्तिमार्गस्य कथनात् पुष्टिरस्तीति निश्चय इति । अयमर्थः । मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधावित्यारभ्य, स एव भक्तियोगाख्य आत्यन्तिक उदाहृत इत्यन्तं, ग्रन्थादौ भागवते भक्तिमार्गस्य निर्गुणस्य निरूपणाद् भक्तिसत्तायां सिद्धायां तादृशा भक्त्या तत्कारणभूता पुष्टिरनुग्रहरूपा भगवत्यस्तीति निश्चय इत्यर्थः । सापीशानुकथाशब्देन नवमस्कन्धे व्यवह्रियते । ईशस्य अनुगामिनां कथा भगवच्छ्रवणादिरूपं चरित्रमित्यर्थः ।

तच्च द्विविधं, मर्यादाभक्तिरूपं, पुष्टिभक्तिरूपं च । तत्र विशेषानुग्रहजन्या या भक्तिः सा पुष्टिभक्तिः । तल्लक्षणं तु भगवत्स्वरूपातिरिक्तफलाकाङ्क्षारहितत्वे सति भगवत्स्वरूपात्मकफलाकाङ्क्षावत्त्वम् । अत एव, अक्षण्वतां फलमित्यत्र स्वरूपस्यैव फलत्वं निरणायि । अतः पुष्टिमार्गीया न तदतिरिक्तं कामयन्ते । न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनाऽन्यदिति भगवद्वाक्यात् । एतच्च, वीक्ष्यालकावृतमुखं तव कुण्डलश्रीति पुष्टिभक्तव्रजसुन्दरीवाक्ये स्पष्टम् । भक्तिहंसे च निरूपितं, भक्तौ च न स्वरूपातिरिक्तफलकत्वमित्यनेन ।

सा पुष्टिभक्तिश्चतुर्धा । प्रवाहपुष्टिभक्तिमर्यादापुष्टिभक्तिपुष्टिपुष्टिभक्तिशुद्धपुष्टिभक्तिभेदात् । 'पुष्ट्या विमिश्राः सर्वज्ञाः प्रवाहेण क्रियारताः । मर्यादया गुणज्ञास्ते शुद्धाः प्रेम्णातिदुर्लभा' इति वाक्यात् । पुष्ट्येत्यादि । ये पुष्टिभक्ताः पुनः पुष्ट्या विमिश्रा अनुग्रहान्तरेण भजनोपयोगिज्ञानजनकेन युक्तास्ते सर्वज्ञा भवन्ति । सर्वशब्देन प्रभुतल्लीलातत्परिकरप्रपञ्चस्वरूपादि ग्राह्यम् । सर्ववस्तूनां यथोक्तस्वरूपं विदित्वा ये भजन्ते ते पुष्टभक्ता इत्यर्थः । प्रवाहेणेति । प्रवाहस्याहन्ताममतात्मकसंसारप्रधानत्वात् तद्धर्मेण केवलं कर्मरुचयः, पुष्टिभक्तत्वाच्च भगवदुपयोगिक्रियायां प्रवर्त्तन्ते प्रवाहपुष्टिभक्ताः । मर्यादयेति । मर्यादा हि जीवस्य रागतो विषयप्रवृत्तिं निराकृत्य निवृत्तिमार्गीयधर्मेषु योजयति । अतो मर्यादया मिश्रणाद्विषयासक्तिमविभाव्य भगवत्कथाश्रवणादौ ये प्रवर्तन्ते ते मर्यादापुष्टिभक्ताः । शुद्धाः प्रेम्णेति । ये केवलं प्रेमप्रधानाः परिचर्यागुणगानादिकं स्नेहेनैव कुर्वन्ति तेऽत्यन्तं दुर्लभाः सर्वोत्कृष्टा इत्यर्थः । स्नेहोत्पत्त्यनन्तरं स्वव्यसनतः क्रियमाणः श्र-

वणादिरुत्तमः पुष्टिभक्तिरिति भक्तिहंसे तेषामेव भक्तेः स्वरूपमु- क्तम्। न तु सामान्यतः पुष्टिभक्तिस्वरूपम् । स्नेहानन्तर्यकथाना- वुत्तमपदप्रयोगाच्च।

इदमत्र ज्ञेयम्, जीवैः पुष्टिपुष्टिभक्त्यर्थं यतनीयम् । भगवद्- भक्त्युपयोगिज्ञानं सम्पाद्य भगवान् भजनीयः । चतुर्थी शुद्धपुष्टिभ क्तिस्तु भगवदिच्छया प्राप्यते। भक्तिः शुद्धा स्वतन्त्रा च दुर्लभेति न सोच्यत इति निबन्धात्। नचानुग्रहे वैलक्षण्याभावात् तज्जन्यभक्तौ कथं नानात्वमिति शङ्क्यम्। 'नेमं विरञ्चो न भवो न श्रीरप्यङ्ग- संश्रया। प्रसादं लेभिरे गोपी यत्तत् प्राप विमुक्तिदात्। नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः। रासो- त्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद् व्रजवल्लवीना- म्' इत्यादिवाक्यैस्तथाऽवधारणात् । अतोऽनुग्रहविशेषेण पुष्टिभक्ति- र्लभ्यते। तया भगवांस्तदधीनो भवति। वशे कुर्वन्ति मां भक्त्येत्या- दिवाक्यैः। कृष्णाधीना तु मर्यादा स्वाधीना पुष्टिरुच्यत इति निब- न्धोक्तेश्च। इह पुष्टिशब्देन पुष्टिभक्तिः । यत्र च भक्तस्य स्वातन्त्र्यं तदिच्छानुसारेण भगवत्कृतिर्यथा दामोदरलीलायां सा पुष्टिरिति व्याख्यास्वारस्यात्। पुष्टिः स्वार्था परार्था तु भक्तिः सा नवमी मतेत्या- दिवाक्येषु पुष्टिशब्देनानुग्रह एव ग्राह्यो, न पुष्टिभक्तिः। तथैव ग्रन्था- ऽर्थसिद्धेः । तदेवं सुबोधिनीनिबन्धादिषु पुष्टिशब्देन क्वचिदनुग्रहः, क्वचित् तज्जन्या भक्तिरुच्यते । स एव च पुष्टिमार्ग इति सहृदयै- र्विभावनीयम्।

नच भगवत्स्वरूपातिरिक्तफलकाङ्क्षारहितत्वं प्रवाहपुष्टिभ- क्त्यादावव्याप्तं, तादृग्भावस्य शुद्धपुष्टिभक्तेष्वेव प्रसिद्धेरिति वाच्य- म् । शुद्धपुष्टिभक्तेतरपुष्टिभक्तेष्वपि मोक्षान्तफलाकाङ्क्षाविरहस्य सिद्धत्वात्। नारायणपरा लोके न कुतश्चन बिभ्यति । स्वर्गापवर्ग- नरकेष्वपि तुल्यार्थदर्शिन इति वाक्यात्। इदं वाक्यं न शुद्धपुष्टिभक्त- परम्। एतादृशस्तु पुरुषः कोटिष्वपि सुदुर्लभ इत्यस्य व्याख्याने नि- बन्धे ज्ञानमिश्रनिर्णयात्। न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्ष इति वृत्रवाक्यात् । वृत्रस्य शुद्धपुष्टित्वाभावात् । अतो लक्षणं सुस्थम्।

श्रीहरिरायैस्तु शुद्धपुष्टिभक्तेरेव स्वरूपं कारिकाभिर्विवृतम्।

न तु पुष्टिर्लक्षिता । विचारे क्रियमाणे तथैवार्थस्फूर्तेः । अन्यथा सर्वसाधनराहित्यादिधर्माणां प्रवाहपुष्टिभक्तावव्याप्तेश्च । अतो नेदमसाधारणं लक्षणं, किन्तु शुद्धपुष्टिभक्तेर्धर्माणां निरूपणमिति ज्ञेयम् । तथाहि ।

सर्वसाधनराहित्यं फलाप्तौ यत्र साधनम् ।
फलं वा साधनं यत्र पुष्टिमार्गः स कथ्यते ॥ १ ॥

सर्वेत्यादि । यत्र फलस्य भगवत आप्तौ सर्वसाधनाभावो हेतुः स शुद्धपुष्टिभक्तिमार्गः कथ्यत इत्यर्थः । तामसप्रकरणीय-फलप्रकरणेऽन्वेषणगुणगानादिसाधनानि त्यक्त्वा रोदनेन दैन्ये प्रकटीकृते व्रजवधूनां भगवदाप्तिकथनात् । एवं सति साधना-भावस्यापि साधनतायां, न निःसाधनफलत्वं प्रभौ सिध्यतील्य-रुच्या पक्षान्तरमाहुः । फलं वेत्यादिना । फलरूपो भगवानेव स्वरूपात्मकफलाप्तौ साधनमित्यर्थः । अत एव श्रीमदाचार्यैरुक्तम् । ततो भगवान् ब्रह्मा विष्णू रुद्रश्च भूत्वा पुनः कृष्ण एव जात इत्याहेति ॥ १ ॥

अनुग्रहेणैव सिद्धिर्लौकिकी यत्र वैदिकी ।
न यत्नादन्यथा विघ्नः पुष्टिमार्गः स कथ्यते ॥ २ ॥

अनुग्रहेणेत्यादि । साधनान्तरनिरपेक्षेणानुग्रहेण यत्र लौकि-कवैदिकसिद्धिः स शुद्धपुष्टिमार्गः । अत एव व्रजस्थानां तथैव वै-कुण्ठप्राप्तिः । अह्न्यापृतं निशि शयानमतिश्रमेण लोकं विकुण्ठ-मुपनेष्यति गोकुलं स्मेति ब्रह्मवाक्यात् । यत्ने कृते तु विघ्न एव भवेत् । एतच्च श्रीनन्दादीनामम्बिकावनयात्राप्रसङ्गे स्पष्टम् ॥ २ ॥

यत्राङ्गीकरणे नैव योग्यतादिविचारणम् ।
अविलम्बः प्रभुकृतः पुष्टिमार्गः स कथ्यते ॥ ३ ॥

यत्रेत्यादि । प्रभुर्जीवयोग्यताविचारमकृत्वैव यत्र शीघ्रम-ङ्गीकरोति स शुद्धपुष्टिमार्गः । केवलेन हि भावेन गोप्यो गावः खगा मृगा इति वाक्यात् । स्वरूपविचारे तु शास्त्रस्य पुरुषाधिकारकत्वेन पश्वादीनां मोक्षसम्भावनैव नास्तीति ज्ञेयम् ॥ ३ ॥

स्वरूपमात्रपरतातात्पर्यज्ञानपूर्वकम् ।
धर्मनिष्ठा यत्र नैव पुष्टिमार्गः स कथ्यते ॥ ४ ॥

स्वरूपेत्यादि । यत्र धर्मविधायकवाक्यानां भगवत्सम्बन्धे

तात्पर्यमवगत्य कृताप्यवसरे तत्प्रतिबन्धकधर्मान् हित्वा धर्मिपरतया स्थीयते, स शुद्धपुष्टिभक्तिमार्गः । अत एव श्रवणाद्दर्शनाद् ध्यानान्मयि भाव इति वाक्यतात्पर्यमवगत्य स्वरूपपरतयैव स्थितं, न तु तद्विरुद्धं गृहगमनमाचरितम् ॥ ४ ॥

यत्र प्रभुकृतौ नैव गुणदोषविचारणम् ।
तत्कृतावुत्तमत्वज्ञा पुष्टिमार्गः स कथ्यते ॥ ५ ॥

यत्रेत्यादि । यत्र रोदनचौर्यादिरूपे चरित्रे हीनत्वबुद्ध्या नानुपादेयत्वरूपदोषदृष्टिः । न वा कालीयदमनदावाग्निमोक्षणादिषु माहात्म्यबोधनादिषु चरित्रान्तरेभ्यो वैशिष्ट्यबुद्धिः । किं तु भगवत्कृतिमात्र उत्तमत्वज्ञानं सर्वत्र स पुष्टिमार्गः ॥ ५ ॥

न वेदलोकसापेक्ष्यं सर्वथा यत्र वर्त्तते ।
सापेक्षता स्वामिसुखे पुष्टिमार्गः स कथ्यते ॥ ६ ॥

न लोकेत्यादि । यत्र तु स्वामिसुखार्थमेवाखिलचेष्टितं, नैहिकपारलौकिकयत्नः स शुद्धपुष्टिभक्तिमार्गः । 'दिष्ट्या पुत्रान् पतीन् देहान् स्वजनान् भवनानि च । हित्वा वृणीत यूयं यत् कृष्णाख्यं पुरुषं परमिति वाक्यात् ॥ ६ ॥

वरणे दृश्यते यत्र हेतुर्नाणुरपि स्वतः ।
वरणं च निजेच्छातः पुष्टिमार्गः स कथ्यते ॥ ७ ॥

वरणेत्यादि । स्वीयत्वेनाङ्गीकृतौ जीवकर्तृकसाधनानां यत्र न कारणता, स शुद्धपुष्टिमार्गः । यतः साधनसम्पन्नेष्वपि न तत्फलं, यदत्यन्तायोग्येषु पुलिन्द्यादिषु दीयते । यमेवैष वृणुते तेन लभ्य इति श्रुतिरत्राप्यनुसन्धेया ॥ ७ ॥

यत्र स्वतन्त्रता भक्तेराविर्भावानपेक्षणात् ।
पूर्वानुभवरूपत्वं पुष्टिमार्गः स कथ्यते ॥ ८ ॥

यत्रेति यत्र वियोगावस्थायां गुणगानादिरूपाया भक्तेरेव स्वरूपानन्दात्मकफलदाने स्वतन्त्रता, न स्वरूपाविर्भावस्य संयोगरससम्बन्धिन आकाङ्क्षा । प्रेमभरेण जायमानस्य श्रवणकीर्त्तनादेरेव सर्वसुखानुभवरूपत्वं, स शुद्धपुष्टिमार्गः ॥ ८ ॥

लोकवेदभयाभावो यत्र भावातिरेकतः ।
सर्वबाधकतास्फूर्तिः पुष्टिमार्गः स कथ्यते ॥ ९ ॥

लोकवेदेत्यादि । यत्र भावातिरेकतो भगवद्भावाधिक्यात् पति-

पुत्रादिभयं पारलौकिकभयं च नास्ति। भगवद्भावे सर्वस्य कालकर्मस्वभावादेर्बाधकोऽयमिति स्फूर्तिः स शुद्धपुष्टिभक्तिमार्ग इत्यर्थः। अत एवाऽस्वर्ग्यमयशस्यं चेत्यादिवाक्यैर्वेदभयं, विचिन्वन्ति ह्यपश्यन्त इत्यादिभिर्लोकभयं च नोत्पन्नम् ॥ ९ ॥

सम्बन्धः साधनं यत्र फलं सम्बन्ध एव हि।
सोऽपि कृष्णेच्छया जातः पुष्टिमार्गः स कथ्यते ॥ १० ॥

सम्बन्ध इत्यादि। यत्र जीवानां भगवता सह देहजभावजान्यतरसम्बन्धः फले साधनम्। यत्र च सम्बन्धः सर्वेन्द्रियाणां प्रभुणा संगमः स एव फलं स शुद्धपुष्टिमार्गः। भगवता सह संलापो दर्शनं मिलितस्य चेत्यादिवाक्यात्। किञ्च सम्बन्धोऽपि यत्र कृष्णेच्छया कृष्णस्य भक्तविषयिण्येच्छया जातः स तथा। मदन्यत् ते न जानन्ति, नाहं तेभ्यो मनागपीति वाक्यात् ॥ १० ॥

तत्सम्बन्धिषु तद्भावस्तद्भिन्नेषु विरोधिता।
उदासीनेषु समता पुष्टिमार्गः स कथ्यते ॥ ११ ॥

तत्सम्बन्धिष्विति। यत्र प्रभुसम्बन्धिषु भगवद्बुद्धिर्भिन्नोदासीनयोर्विरोधिसमत्वबुद्धिः स पुष्टिमार्गः। अत एवोद्धवदर्शने परमोत्साहः। इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदाम्बुजाश्रयमिति वाक्यात् ॥ ११ ॥

विद्यमानस्य देहादेर्न स्वीयत्वेन भावनम्।
परोक्षेऽपि तदर्थित्वं पुष्टिमार्गः स कथ्यते ॥ १२ ॥

विद्यमानस्येति। यत्र देहादेर्न स्वीयत्वबुद्ध्या रक्षणादिकमपि तु भगवदीयत्वबुद्ध्या, स पुष्टिमार्गः। किञ्च, परोक्षेऽपि विरहावस्थायामपि भगवदुपयोगं भाविनमालोच्य शरीरादिरक्षा स तथा। त्वयि धृताऽसवस्त्वां विचिन्वत इति वाक्यात्। त्वदर्थमेव प्राणानां धारणमिति व्याख्यानात् ॥ १२ ॥

भजने यत्र सेव्यस्य नोपकारकृतिः क्वचित्।
पोषणं भावमात्रस्य पुष्टिमार्गः स कथ्यते ॥ १३ ॥

भजने यत्रेत्यादि। यत्र सेव्यस्य उपकारकृतिरपेक्ष्यत्वेन नास्ति, यत्र च सेव्यकर्तृकं सेवकाधिकरणकं भावपोषणं स शुद्धपुष्टिमार्गः। अत एव गोवर्द्धनमखप्रसङ्गे अन्यभजनान्निवृत्त्य स्वभजनयोजनेन भाववृद्धिं कृतवान् प्रभुरिति ज्ञेयम् ॥ १३ ॥

भजनस्यापवादो न क्रियते फलदानतः।
प्रभुणा यत्र तद्भावात् पुष्टिमार्गः स कथ्यते ॥ १४ ॥

भजनस्यापवाद इत्यादि । यत्र प्रभुणा भजनस्य फलदानेन अपवादो न क्रियते स शुद्धपुष्टिमार्गः । अयमर्थः । विरहानुभवार्थं भगवता वियोगे सम्पादिते गोपिकास्तज्जन्यं तापं भूयांसं प्राप्नुवन्त्यः । यदि तदवस्थायां गुणगानादिना अन्तरेव प्रकटीभूय सुखं दद्याज्ज्ञानमुत्पाद्य ज्ञानिनामिव वा सुखं दद्यात्, तदा पूर्णतापाऽनुभवाभावेनोत्तरदलादानमेव स्यात् । अतो भगवान् न तथा करोति, प्रत्युत तापमेव वर्द्धयति । कृष्णावेशात्मविक्लवमिति वाक्यात् । इहागतोऽहं विरहातुरात्मेति प्राप्तोपदेशोद्धववाक्याच्च ॥१४॥

यत्र वा सुखसम्बन्धो वियोगे सङ्गमादपि ।
सर्वलीलाऽनुभवतः पुष्टिमार्गः स कथ्यते ॥ १५ ॥

यत्रेत्यादि । यत्र वियोगावस्थायां संयोगावस्थातोऽप्यधिकं सुखम् । क्षणे क्षणे एवान्तलीलान्तरप्राकट्यात् । कस्याश्चिल्लीलाया भावनेन प्रकटीभूताया अनुभवे पुनरन्यस्या लीलाया दिदृक्षया तत्प्राप्तिसौकर्यात् । अत एव सुबोधिन्यामुक्तम् । आन्तरं तु परं फलं भावमिति ॥ १५ ॥

फले च साधने चैव सर्वत्र विपरीतता ।
फलं भावः साधनं स पुष्टिमार्गः स कथ्यते ॥ १६ ॥

फले चेत्यादि। यत्र साधनफलयोर्वैपरीत्यं स शुद्धपुष्टिभक्तिमार्गः । तमेव स्पष्टयन्ति । फलमित्यादिना । यत्र भावो निरूपधिः स्नेहः फलं प्राप्तव्यमित्यर्थः । स्वरूपानन्दप्राप्तिसाधनस्यापि भावस्य पूर्वप्रार्थनीयत्वेन फलत्वात् । स च भावो भगवद्दत्त एव प्राप्यत इति स फलरूपो भगवानेव तत्र साधनमिति स्फुटमेव साधनफलयोर्वैपरीत्यमिति भावः ॥ १६ ॥

पश्चात्तापः सदा यत्र तत्सम्बन्धिकृतावपि ।
दैन्योद्बोधाय सततं पुष्टिमार्गः स कथ्यते ॥ १७ ॥

पश्चात्ताप इत्यादि। यत्र भगवत्सम्बन्धिकृतौ भगवल्लीलायामनुभूयमानायामपि पश्चात्तापः स शुद्धपुष्टिमार्गः । अयमर्थः । भगवतो व्रजागमनादौ या व्रजभक्तानुगुणा कृतिस्तदानन्दमनुभवन्त्यो वनकृतलीलान्तराननुभवजन्यं पश्चात्तापं कुर्वन्ति । तेन च दैन्य-

माविर्भवति, न तु मानादि । अयं चैको विलक्षणोऽनुभवः, पीत्वा मुकुन्देत्यस्य व्याख्याने स्पष्टः ॥ १७ ॥

आविर्भावे नसापेक्षं दैन्यं बल हि साधनम् ।
फलं वियोगजं दैन्यं पुष्टिमार्गः स कथ्यते ॥ १८ ॥

आविर्भाव इत्यादि । यत्र जीवाधिकरणकं दैन्यमन्यनिरपेक्षं भगवदाविर्भावे कारणं स शुद्धपुष्टिमार्गः । वियोगे मिलनार्त्या तद्सम्भवजं यद्दैन्यं तद्यत्र फलं प्रार्थनीयमवान्तरफलम् । विरहो हि दैन्यमुत्पादयति । संयोगो मानमिव । तद्दैन्यं च भगवन्तमाविर्भावयति । अतः प्रार्थनीयत्वात् फलत्वम् । अत एव श्रीगोकुलनाथैरुक्तं, तां कृपां कुरु राधेश यया तद्दैन्यमाप्नुयामिति ॥ १८ ॥

समस्तविषयत्यागः सर्वभावेन यत्र हि ।
समर्पणं च देहादेः पुष्टिमार्गः स कथ्यते ॥ १९ ॥

समस्तेत्यादि । यत्र सकललौकिकविषयाणां त्यागः सानुरागग्रहणाभावः स शुद्धपुष्टिमार्गः । सर्वभावेन सर्वात्मना देहादेर्यत्र समर्पणम् । अत एव व्रजवरवधूभिरुक्तं, सन्त्यज्य सर्वविषयांस्तव पादमूलं प्राप्ता इति ॥ १९ ॥

विषयत्वेन तत्त्यागः स्वस्मिन् विषयता स्मृतेः ।
यत्र वै सर्वभावेन पुष्टिमार्गः स कथ्यते ॥ २० ॥

विषयत्वेनेत्यादि । यत्र विषयत्वेन विषयाणां त्यागो ममताविरहो, भगवदीयत्वेन ग्रहणं स पुष्टिमार्गः । कृतात्मनिवेदनानां तावदंशस्यैव त्याज्यत्वात् । क्रीडार्थमात्मन इदं त्रिजगत् कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युरिति वाक्यात् पदार्थमात्रस्य भगवदीयत्वेन उत्तमत्वम् । तथा सति ममतामात्रस्यैव संसारत्वेनानादरणीयत्वम् । किञ्च । स्वस्मिन्नित्यादि । यत्र सर्वभावेन सर्वात्मना स्वस्मिञ्जीवे भगवत्स्मृतेर्विषयता स शुद्धपुष्टिभक्तिमार्गः । अयमर्थः । भक्तो हि यदि भगवत्कर्तृकस्मृतिविषयो भवति तदा भक्तेः साफल्यम् । यदनुस्मर्यते काले स्वबुद्ध्याऽभद्ररन्धनेति प्रचेतोवाक्यात् । एतच्च, नामभिर्दूरगान् पशून्; क्वचिदाह्वयति प्रीत्येत्यस्य व्याख्याने स्पष्टम् ॥ २० ॥

एवमुक्तोपसंहरन्ति ।

एवंविधैर्विशेषेण प्रकारैस्तु सदाश्रितैः ।

हृदि कृत्वा निजाचार्यान् पुष्टिमार्गो हि बुध्यताम् ॥ २१ ॥

एवमित्यादिना ॥ २१ ॥

एवमन्यैरपि पुष्टिमार्गीयैः शुद्धपुष्टौ श्रद्धाधिक्यात् प्रायस्तत्स्वरूपमेवोच्यते, न तु सामान्यतः पुष्टिभक्तिरूपम् । सामान्यलक्षणं तु पूर्वोक्तमेव निबन्धादिसिद्धमिति कोविदा एव विदाङ्कुर्वन्तु ।

इति श्रीगोवर्द्धनधरश्रीवल्लभाधीशश्रीविठ्ठलेश्वरचरणानुचरसेवकेन लालूभट्टोपनामबालकृष्णेन कृते प्रमेयरत्नार्णवे पुष्टिविवेकः समाप्तिमगमत् ॥ ४ ॥

अथ पुष्टिभक्तिमार्गाधिकारो विमृश्यते। तत्र नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्य इति श्रुतेर्यस्मिन् भगवत्कृपा सोऽधिकारी। तत्र कृपाया अप्रत्यक्षत्वात् तत्कार्यरूपपुष्टिमार्गरुच्या साऽनुमीयते। यतः कृपां विना पुष्टिमार्गे रुचिर्नोदेति। तदुक्तं निबन्धे, कृपायुक्तस्य तु यथा सिद्ध्येत् कारणमुच्यते इति। व्याख्याने, कृपापरिज्ञानं च मार्गरुच्या निश्चीयत इति। एवञ्च पुष्टिमार्गीयफलदित्सासमुद्भूतभगवत्कृपाजन्यपुष्टिमार्गविषयकरुचिमान् अधिकारीति ज्ञेयम्। तादृशरुच्युत्पत्तौ प्रकार उच्यते। तथाहि। दैवजीवेषु यं जीवं पुष्टिमार्गेऽङ्गीकर्तुं हरिर्वाञ्छति, तस्य प्रभुकृपया सत्सङ्गे सति तत्कृपया परिचर्यादिना तत्प्रसङ्गाद्यथासम्भवं श्रवणतनुजसेवनादिरूपभजनानुभवादेतन्मार्गे रुचिराविर्भवति। एवं प्रवृत्तस्य विशुद्धचेतसस्तद्धर्म एवात्मरुचिः प्रजायत इति वाक्यात्। एतादृशरुचिमान् अधिकारी पुष्टिमार्गे। ततो मार्गरुच्या क्रियमाणे श्रवणादौ चित्ते भगवदावेशः। ततश्चित्तशुद्धिः। ततः श्रवणाद्यनुवृत्तिः। तदुक्तं द्वितीयस्कन्धे, 'प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्। धुनोति शमलं कृष्णः सलिलस्य यथा शरत्। धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चतीति' इति। एवं श्रवणाद्यावृत्तौ भगवति रुचिरुत्पद्यते। ताः श्रद्धया मेऽनुपदं विश्रृण्वतः प्रियश्रवस्यङ्ग ममाभवद्रुचिरिति वाक्यात्। इयमननुभूतविषया परोक्षरुचिरित्युच्यते। इयं हि श्रवणादिना सत्पुरुषादरदर्शनादिना रुचिराविर्भवतीति प्रथमकक्षापन्ना ज्ञेया। यदनुध्यासिना युक्ता इति श्लोकव्याख्याने सर्वत्रालौकिकेषु पदार्थेषु माहात्म्यश्रवणाद् रुचिरुत्पद्यत इति सुबोधिन्यामियमेव रुचिरुक्तेति बोध्यम्।

सा भक्तिरेव। रुचिः श्रवणादिः प्रेम चेति भक्तिस्त्रिविधेति प्रथमस्कन्धसुबोधिन्यामुक्तेः। ततोऽननुभूतविषयया भगवद्रुच्या श्रवणादिरूपे भजने भक्तिवर्द्धिनीप्रकरणोक्तदिशा बीजरूपो भावः सूक्ष्मभक्तिर्वृद्धिं प्राप्नोति। स भावो भगवता पूर्वमेव जीवत्वसम्पादनोत्तरं पुष्टिमार्गीयत्वसिद्धये सूक्ष्मरूपः स्थापित इति ज्ञेयम्। स बीजभाव इत्युच्यते। स एष भावः परोक्षरुच्या श्रवणादिसहकृतोऽन्तर्भगवत्स्फूर्तिं करोति। श्रवणादिना तु स्वाभाविको भग-

वानाविर्भवतीति द्वितीयस्कन्धनिबन्धात् । तथा सति अन्तर्भगवत्स्फूर्त्तौ यत्किञ्चिदनुभवाद् रुचिविशेष उत्पद्यते । स च अपरोक्षरुचिरित्युच्यते । तया स एव भावो बीजरूपः श्रवणादिसाधनैर्वृद्धः सन् प्रेमरूपो भवति । स च स्नेहो हरीतरविषयकरागनिवर्तकः । स्नेहाद्रागविनाशः स्यादिति भक्तिवर्द्धिनीग्रन्थात् । भगवद्भिन्नरागनिवर्तको भगवद्भावः स्नेह इति कार्यलक्षणात् । ततः सेवाश्रवणाऽऽवृत्त्या वर्द्धमानः स एवाऽऽसक्तिरूपो भवति । स तु भगवत्सम्बन्धरहितपदार्थेषु बाधकत्वं भासयति । आसक्त्या स्याद् गृहारुचिरिति भक्तिवर्द्धिनीप्रकरणात् । अरुचिर्न रुच्यभावः, किन्तु रुचिविरुद्धो भावः । विरोधार्थे नञः स्मरणात् । गृहस्थानां बाधकत्वमनात्मत्वं च भासत इति तत्रैव विवरणात् । तथाच भगवदितरविषयबाधकत्वस्फूर्तिसम्पादको भाव आसक्तिरिति लक्षणम् । ततः स एवोत्तरोत्तरं वृद्धो व्यसनत्वं प्राप्नोति । विशेषेण अस्यन्ते क्षिप्यन्ते दैहिका धर्मा अनेनेति व्यसनम् । सा व्यसनं भावं प्राप्ता भक्तिर्मानसी सेवेत्युच्यते । सा परानुरक्तिरीश्वर इति भक्तिसूत्रात् । यदा स्याद् व्यसनं कृष्णे कृतार्थः स्यात् तदैव हीति भक्तिवर्द्धिन्याम् । चेतस्तत्प्रवणं सेवा तत्सिद्ध्यै तनुवित्तजेति मुक्तावलीप्रकरणे तदर्थस्यैव स्फुटीकरणात् । मुक्तावलीप्रकाशे एतद्विवृतौ, ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदमित्येकादशवाक्योपन्यासाच्च । 'मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ । लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्' इति तृतीयस्कन्धे तादृग्भक्तेर्लक्षितत्वाच्च । अत एवैतद्व्याख्याने, यथा कायिकगतिर्गोपिकानामित्यनेन मुख्यभक्ता एवोदाहृताः । अतो व्यसनपर्यन्तं साधनाचरणम् । अत एव सुबोधिनीनिबन्धयोः प्रमाणप्रमेयसाधनाख्यैस्त्रिभिः प्रकरणैः प्रेमासक्तिव्यसनानि निरूप्याग्रे फलं निरूपितम् । अतः श्रीमद्भागवतादौ श्रीमदाचार्योक्तौ श्रीमद्विठ्ठलेशोक्तौ च यत्र यत्र साधनानां प्रेमावधिकत्वं दृश्यते तत्र तत्र प्रेमव्यसनयोरभेदमादायोक्तमिति ज्ञेयम् । प्रेमसेवाऽत एव स्याद्विशिष्टव्यक्तिरुत्तमेत्यादावपि प्रेमसेवाशब्देन मानसी सेवा व्यसनशब्दवाच्या ज्ञेया । एवं सति भगवद्रुच्युत्पत्त्यनन्तरं क्रियमाणैः श्रवणादिभिः साध्यायाः प्रेमभक्तेः प्रथमावस्था प्रेमशब्दवाच्या । ततो मध्यमावस्था आसक्तिः । परिपाकावस्था व्यसन-

शब्दवाच्येत्येवमभेदात् कुत्रचित् प्रेमशब्देनासक्तिः, कुत्रचिद् व्यसनमभिधीयत इत्यर्थः स्वारस्याद् बोध्यः । मुख्यफलं तु व्यसनोत्तरमेव । यदा स्याद् व्यसनं कृष्णे कृतार्थः स्यात् तदैव हीत्यत्र एवकारेणान्ययोगव्यवच्छेदात् । इयं व्यसनात्मिकैव भक्तिर्भगवता देवहूतिं प्रत्यात्यन्तिकीत्वेनोक्ता ।

अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ।
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ।

स एव भक्तियोगाख्य आत्यन्तिक उदाहृत इति तृतीयस्कन्धात् । व्याख्यातं चाऽऽचार्यैः । अत्यन्तप्रेमोत्पत्तावेवं भवतीति । अतः प्रेमपरिपाकावस्था व्यसनम् । ततो व्यसनवशात् सर्वत्र पुरुषोत्तमबुद्धौ सर्वत्रैवोत्कटस्नेहो भवति । स सर्वात्मभावशब्दवाच्यः । तत्सिद्धौ पुरुषोत्तमाविर्भावो बाह्याभ्यन्तरभेदेन निरन्तरं सिद्ध्यति । ततः फलावसरे सेवाफलप्रकरणोक्तरीत्या ह्यलौकिकसामर्थ्यं फलं भविष्यतीत्यलं विस्तरेण ।

एवमनेन प्रकारेण शुद्धपुष्टिभक्तानामधिकारः फलसहितो निरूपितः ।

फलं तु नित्यलीलान्तःप्रवेशलक्षणम् । तदेव सेवाफलविवरणेऽलौकिकसामर्थ्यशब्देनोच्यते । आनन्दमयाधिकरणभाष्ये भगवता सह कामाशनाख्यं यत्फलमुक्तं जीवस्यात्यनुगृहीतस्य तदिदम् । पुष्टिप्रवाहमर्यादानिरूपणग्रन्थे, भगवानेव हि फलमित्यनेन स्वरूपस्यैव फलत्वमुक्तं तदपि नित्यलीलान्तःप्रवेशरूपम् । तच्च बहुप्रकारकं ज्ञेयम् । नित्यलीलायां हि केचन भक्तरूपेण गोपशुपक्षिवृक्षादिरूपेण नद्यादिरूपेण पुरुषोत्तमात्मकं फलं निरवध्यानन्दात्मकम्, आनन्दमयाधिकरणभाष्योक्तरीत्या तादृशमलौकिकं देहं प्राप्य देहेन्द्रियप्राणान्तःकरणजीवेषु भगवदानन्दप्राकट्यात् तादृशा भूत्वाऽनुभवन्ति । अत एव, अहो अमी देववराऽमरार्चितमित्यादिभिर्भगवता स्वलीलापरिकरस्वरूपं तादृशमेव निरूपितम् । पुष्टिमार्गीयो जीवस्तु फलदशायां तत्परिकरमध्येऽन्यतमः कश्चिद्भविष्यति । तत्र भगवदिच्छा नियामिका ।

पुष्टिभक्तिश्चतुर्विधा शुद्धपुष्टिपुष्टिपुष्टिमर्यादापुष्टिप्रवाहपु-

ष्टिभेदात् । तत्र पुष्टिभक्तित्वेन रूपेणैक्येऽपि प्रकारभेदाद्भेदः । एव-मेतत्फलस्यापि नित्यलीलान्तःप्रवेशत्वेनैक्येऽपि प्रकारभेदो भक्तगो-पशुवृक्षादिरूपेण बोध्यः । एतदेव तारतम्यं च । तथा सति सर्वेषां प्रवाहादिभेदभिन्नानां पुष्टिस्थानामेकमेवालौकिकसामर्थ्यरूपं फलं नित्यलीलान्तःपातित्वशब्दवाच्यम् । तदाऽपीतेः संसारव्यपदेशादिति तत्त्वसूत्रे, तदा नित्यलीलान्तःपातलक्षणपुष्टिमार्गीयमुक्तिदशायामि-ति भाष्योक्तेः । नित्यलीलाश्च शुद्धपुष्टिस्था व्रजसम्बन्धिन्यो ज्ञेयाः । तादृशनित्यलीलान्तःपाते सति पुनः प्रकारविशेषस्त्विष्ट एव । आ-सामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीना-मिति वाक्यात् । अत आधिदैविके बृहद्वृन्दावनादौ भक्तरूपेण गोपा-दिरूपेण वा स्थित्वा रसानुभवः । आधुनिकानामपि पुष्टिमार्गेस्थि-तानां तादृग्भगवत्कृपया पर्यवसाने फलरूपभावोत्पत्तौ नित्यलीला-न्तःपातो भविष्यति । तत्र ये आधुनिका हीनाधिकारिणः पुष्टिमा-र्गीयास्तेषां चरमजन्माभावाद् बहुभिर्जन्मभिस्तादृशभावोत्पत्तौ नि-त्यलीलाप्रवेशो भावीति बोध्यम् । तृतीयस्कन्धे, देवानां गुणलिङ्गा-नामित्यत्र सुबोधिन्याम्, अन्येषां तु यथाकथञ्चित् क्रियमाणा भ-गवति खण्डशो वृत्तिरक्षयत्वाद् बहुभिर्जन्मभिः पुष्टिङ्गता अन्तिम-जन्मनि भक्तिरूपां वृत्तिं जनयिष्यतीति न काप्यनुपपत्तिरित्युक्तेः । निबन्धे सेवाप्रकरणे भक्तिमार्गे मुख्यानां फलमाहेत्युक्त्वा, ये व्या-ख्यातास्ते सर्वे मर्यादाभक्तिमार्गीया एव । अधुना त्वित्यारभ्य, सायु-ज्यं कृष्णदेवेनेत्यन्तेन गौणमुख्यभेदेन मर्यादाभक्तानां फलं सायुज्या-ऽवधि निरूपितम् । अत एव, मर्यादाभक्तिमार्गस्य काष्ठा गङ्गा परा स्मृतेति निबन्धाद् गङ्गाया मर्यादाभक्तिरूपायाः सेवनात् सायुज्यं भवतीति । सायुज्यं वाऽन्यथा तस्मिन् गङ्गातीरे न संशय इति नव-मनिबन्धे उक्तम् । सायुज्यं च एकत्वरूपं भगवत्प्रवेशशब्दवाच्यम् । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमित्यादिवाक्यसिद्धम् । अग्रे, तदभावे स्वयं वापि मूर्त्तिं कृत्वेत्यारभ्य, गृहस्थस्य प्रकीर्तित-मित्यन्तेन पुष्टिभक्तिमार्गीयप्रकार उक्तः । विवरणे तु, एवं कुर्वन् स-कुटुम्बो भगवत्सायुज्यमश्नुत इत्यत्र सायुज्यशब्देन अलौकिकसाम-र्थ्यमेव । अत एव, आदिमूर्त्तिः कृष्ण एव सेव्यः सायुज्यकाम्ययेत्य-स्य व्याख्याने, ब्रह्मविदाप्नोति परमित्यत्र यत् सायुज्यं मुख्यतया

निरूपितं तत्कामनायां कृष्ण एव सेव्य इत्यनेन मर्यादामार्गीयसा-युज्याद्भेदं निरूप्यालौकिकसामर्थ्यरूपतैव प्रदर्शिता । एतच्चानन्दम-याधिकरणभाष्ये स्पष्टतममुपलभ्यत इति ततोऽवधेयम्। सेवाफलग्र-न्थव्याख्याने, अलौकिकसामर्थ्यं सायुज्यं सेवोपयोगिदेहो वैकुण्ठा-दिष्वेत्यनेन यत् फलत्रयमुक्तं, तत्रालौकिकसामर्थ्यं पुष्टिमार्गीयाणां फलम् । शिष्टं फलद्वयं तु मर्यादाभक्तानामिति ज्ञेयम् । मूलेऽपि, यादृशी सेवना प्रोक्तेत्यत्र सेवनाशब्देन मर्यादासेवा पुष्टिसेवा चोक्तेति बोद्धव्यम् । विवृतौ फलत्रयं सेवाद्वयस्योक्तम् । तत्र प्रथमं पुष्टिसेवायाः, शिष्टं फलद्वयं मर्यादासेवाया इति विवेकः । अत एव सायुज्यं सेवोपयोगिदेहप्राप्तिश्चान्यत्रापि मर्यादाभक्तस्योक्ता । 'देहभावे दृढे तु स्याद् भक्तानां कृष्णदासता । सायुज्यं वान्यथा तस्मिन् गङ्गातीरे न संशय' इति नवमस्कन्धनिबन्धे । तदविरो-धादत्रापि तत्फलद्वयं मर्याभक्तस्यैवेति निश्चयः ।

विद्यायाः पञ्चपर्वमध्ये या भक्तिरुक्ता सा मार्यादिक्येवेति । यया विद्वान् हरिं विशेदिति निबन्धात् । क्वचिन्मार्यादिक्यां भक्तौ प्रेमशब्दव्यवहारो दृश्यते, तत्र भगवति मोचकत्वबुद्ध्या प्रेमास्तीति तत्सोपाधि प्रेम, नतु पुष्टिमार्गीयाणामिव निरुपाधिकम् । तदुक्तं तृ-तीयाध्याये, गतेरर्थवत्त्वमुभयथान्यथा हि विरोध इति तत्त्वसूत्रीय-भाष्ये । मर्यादापुष्टिभेदेनाङ्गीकारे वैलक्षण्यादाद्यायामङ्गीकृतानां मुमुक्षयैव श्रवणादौ प्रवृत्तिस्तद्दातृत्वेनैव भगवति प्रेमाऽपि, न तु निरुपाधिरिति । आसन् यस्य हरेर्वापि सेवयेत्यस्य व्याख्याने, सा-युज्यब्रह्मभावौ हरिसेवयैव भवतो, नान्यसेवयेत्यत्रापि सेवा मा-र्यादिकीति ज्ञेयम् । अत एव मर्यादास्थानामेव सायुज्यं फलम् । पुष्टिस्थास्तु दीयमानं न गृह्णन्ति विना मत्सेवनं जना इत्यादिवा-क्येभ्यो, नाद्रियन्ते सायुज्यान्तमुक्तिम् । एतच्च, वीक्ष्याऽलकावृत-मुखमित्यस्य सुबोधिन्यां स्पष्टम् । तत्र हि प्रथमं सारूप्यं सालोक्यं सामीप्यं सायुज्यमिति मोक्षभेदा इत्युक्त्वाग्रेऽलकादिस्वरूपं त-त्फलं च व्याख्याय, हसितावलोकमित्यस्य व्याख्याने, ब्रह्मानन्दे प्र-विष्टानां न भक्तिविलास इत्यारभ्य, अनुभवरसो हि भिन्नतया स्थितौ भवतीत्यन्तेन सायुज्यं नाकाङ्क्षितमित्युपपादितम् । अतः सायुज्यं प्राप्तानां, सायुज्ये तु रसाधिक्यं भेदेनानुभवात् सदेति-

वाक्याद्भवन्नपि परमानन्दानुभवः स्वस्वरूपेणैव, न त्वलौकिक-सामर्थ्यं प्राप्तानामिव सर्वेन्द्रियैरात्मना च। ब्रह्मानन्दे प्रविष्टाना-मात्मनैव सुखप्रमेति निबन्धात्। अतः सायुज्यं स्वरूपान्तःपातः, स नापेक्षितः पुष्टिभक्तानां, किन्तु नित्यलीलान्तःपात एवेति सुधीभिर्विभावनीयम्।

एतद्भक्त्यधिकारो विशेषानुग्रहसाध्यः। 'यदा यस्यानुगृह्णाति भगवानात्मभावितः। स जहाति मतिं लोके वेदे च परिनिष्ठिताम्' इति वाक्यात्।

एतद्भक्तिप्रवर्त्तका व्रजभक्ता एव। 'भगवत्युत्तमश्लोके भवतीभिरनुत्तमा। भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभेति' वाक्यात्। व्याख्यातं च श्रीमदाचार्यैः। एतेन शास्त्रप्रसिद्धायां भक्तौ दानादिसाधनानि श्रूयन्ते। अस्यां तु प्रसिद्ध्यभावात् साधनमपि न पश्याम इति भावः सूचित इति। अतः सर्वोत्तमेयं पुष्टिभक्तिरिति भाग्यवद्भिर्ज्ञेयम्।

इति श्रीमद्गोवर्द्धनधरश्रीवल्लभाचार्यश्रीविठ्ठलेश्वरचरणानुचर-सेवकेन लालूभट्टोपनामबालकृष्णेन कृते प्रमेयरत्नार्णवे पुष्टिभक्त्यधिकारविवेकः समाप्तिमगमत्॥ ६॥

पुरुषोत्तमलाभे यो मुख्यहेतुतयोदितः ।
तस्य सर्वात्मभावस्य स्वरूपमिह वर्ण्यते ॥ १ ॥

भगवद्विषयको निरुपधिस्नेहो भक्तिविशेषः सर्वात्मभावः । तथाहि । भावो नाम रतिः । रतिर्देवादिविषया भाव इत्यभिधीयत इति वाक्यात् । आत्मनो भाव आत्मभावः । यथा आत्मन्यात्मनो भावो निरुपधिरेव । न वा रे पुत्राणां कामाय पुत्राः प्रिया भवन्तीत्यादिश्रुतेः । नृप स्वात्मैव वल्लभ इत्यादिवाक्याच्च । अतो यथात्मनि शुद्धः स्नेहस्तथा भगवति कर्त्तव्य इति श्रुतितात्पर्यार्थः । अत एव, स त आत्मान्तर्याम्यमृत इत्यादिना आत्मत्वं बोधयति । तत् त्वमसीत्यत्रापि तथैवाशयः । एतच्च तत्त्वदीपे शास्त्रार्थप्रकरणे उपपादितम् । भगवता ब्रह्माणं प्रतीदमेवाभाणि । 'अहमात्माऽऽत्मनां धातः प्रेष्ठः सन् प्रेयसामपि । अतो मयि रतिं कुर्याद् देहादिर्यत्कृते प्रिय' इति । अनेन भगवद्वाक्येन, श्रुतावप्यात्मत्वकथनं स्नेहार्थमेवेति निर्णीयते । अतो मयि रतिं कुर्यादिति हेतुकथनपूर्वकोपदेशात् । निर्णीतं च विधिना । तदुक्तं द्वितीयस्कन्धे । 'भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत् कूटस्थो रतिरात्मन्यतो भवेदिति' । अत आत्मनो भावो भगवद्विषयोऽत्यादरेण सम्पादनीयः । तस्य सिद्धौ तिरोधाननाशे सर्वत्र पदार्थमात्रे वस्तुतोऽपि भगवद्रूपे परमानन्दरूपस्य पुरुषोत्तमस्य स्फूर्तौ सर्वत्रात्मभावो भवति । तथाच सर्वस्मिन्नात्मभावः सर्वात्मभाव इति फलितम् । 'तव परि ये चरन्ति' इत्यस्य सुबोधिन्यां तवेति षष्ठ्या त्वत्सम्बन्धिनं पदार्थं यं कञ्चन परिचरन्ति, परं सर्वात्मभावोऽपेक्ष्यते । मृत्योः स मृत्युमाप्नोति य इह नाना पश्यतीति भेददर्शन एव मृत्युपराक्रमश्रवणादित्युक्तम् । एतेन सर्वात्मभावपदे सप्तमीतत्पुरुषो भगवत्स्फूर्त्तिरभेदेनैवाहतेत्यध्यवसीयते । आत्मपदेन भगवत्प्रीतिरभेदावगाहिनी, न त्वधिष्ठानभेदसंसृष्टा । तन्त्रान्तरवत् । यत आत्मनि जायमानो भावो ज्ञानमप्यभेदेनैव वस्तुमहिम्नोत्पद्यते । भावपदेन च 'चिन्तयानो हृषीकेशमपश्यत् तन्मयं जगदिति वाक्योक्ते तादृग्भगवत्स्फुरणे नातिप्रसक्तिः । द्वेषप्रयुक्ततया भावत्वाभावात् । तदेवोक्तं श्रीधरस्वामिभिः, सर्वात्मभाव एकान्तभक्तिरिति । एकान्तभक्तिर्गोविन्दे यत् सर्वत्र तदीक्षणमिति तल्लक्षणादस्मदुक्त्या सहै-

ज्ञेयम् । तथा सति सर्वस्मिन्नात्मभावः सर्वात्मभाव इति निष्कर्षः ।

स च मर्यादापुष्टिभेदेन द्विविधः । तत्राद्यो नवमस्कन्धेऽम्बरीषस्योक्तः । 'सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास हेति' । द्वितीयस्तु शुद्धपुष्टिभक्तिमार्गीयाणां व्रजसुन्दरीणां दशमे निरूपितः । विप्रयोगदशायां विगाढभावेन सर्वत्र भगवत्स्फूर्तौ सर्वात्मभावः सिद्ध्यति । एतावान् विशेषः पूर्वस्मात् । एतासां श्रीकृष्णे शृङ्गाररससम्बन्धिभावानां बहूनां सम्भवात् तत्तद्भावसमानाधिकरणः सर्वात्मभावो भजनानन्दानुभावनेऽत्यन्तं निपुण इति शुद्धपुष्टिमार्गीयैस्तोषूय्यते । तदाह भगवान् भाष्यकारः, लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपीति सूत्रे । एतेन सर्वात्मभावस्वरूपमेव विवृतं भवति । तत्र विरहभावे अतिविगाढभावेन सर्वत्र तदेव स्फुरतीति स एवाधस्तादित्यादिनोक्त्वा कदाचित् स्वस्मिन्नेव भगवत्स्फूर्तिरपि भवतीत्यथाहङ्कारादेश इत्यादिना तामुक्त्वा एतेषां व्यभिचारिभावत्वेनानियतत्वं ज्ञापयितुं पुनः सर्वत्र भगवत्स्फूर्तिमाहाथात आत्मादेश इत्यादिनेत्यादि ।

अयं पुष्टिमार्गीयः सर्वात्मभावः शृङ्गाररसमध्यपाती । एतत्प्राप्तौ शुद्धपुष्टिभक्तानामेवाधिकारः । भाष्ये त्वयमेव विशिष्य विवृतः । मर्यादामार्गीयस्तु श्रुतिस्तुतिसुबोधिन्युक्तदिशाऽम्बरीषादिभक्तगम्यः । उभयविधोऽप्युभयत्र परमकाष्ठापन्नभक्तिरूप इति कोविदा विदाङ्कुर्वन्तु ।

नच भ्रमरगीतीयस्य, सर्वात्मभावोऽधिगतो भवतीनामधोक्षज इति श्लोकस्य विवृतौ, सर्वोऽप्यात्मनो भाव इति विवृतत्वान्न पूर्वोक्तं लक्षणमिति वाच्यम् । उद्धवोक्तौ पूर्वोक्तसर्वात्मभावस्याभावात् । किन्तु सर्वोऽप्यात्मनोऽन्तःकरणस्य भावो भवतीनां मम ज्ञानविषयोऽभूदित्यर्थात् । यद्यप्येताः पूर्वोक्तपुष्टिमार्गीयसर्वात्मभाववत्यस्तथाऽप्युद्धवैः स न ज्ञातः, किन्तु तदुक्तशृङ्गाररससम्बन्धिभावमात्रं बुद्धमिति ज्ञेयम् । 'मधुप कितवबन्धो मा स्पृशाङ्घ्रिं सपत्न्या' इत्यादिवाग्विलासैर्घोषभूषणसीमन्तिनीभिस्तदतिरिक्तस्यैव स्फुटीकरणात् । नच 'मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयम्'इत्यत्र सर्वात्मभावेन मां शरणं

याहीत्युक्तत्वाच्छरणसाधनीभूतस्य सर्वात्मभावस्य न पूर्वोक्तरूपतेति वाच्यम् । सर्वदेहिनामात्मानं शरणं शरणभूतं मां सर्वात्मभावेन याहीत्यभिप्रायात् । सूत्रभाष्ये, अथवेति पक्षान्तरेण अस्यैवार्थस्यादृतत्वात् । एवं सर्वात्मभावस्य पूर्वोक्त एव महिमा, लक्षणं च पूर्वोक्तमेवेत्यलं विस्तरेण ।

इति श्रीमद्गोवर्द्धनधरश्रीवल्लभाचार्यश्रीविट्ठलेश्वरचरणाऽनुचरसेवकेन लालूभट्टोपनामबालकृष्णेन कृते प्रमेयरत्नार्णवे सर्वात्मभावविवेकः समाप्तः ॥ ६ ॥

अथ पुष्टिमार्गीयाणां फलं विचार्यते। तत्र प्रथमं 'भगवत्युत्त-मश्लोके भवतीभिरनुत्तमा। भक्तिः प्रवर्त्तिता दिष्ट्या मुनीनामपि दुर्लभा' इत्युद्धववाक्यान्मार्गप्रवर्त्तकत्वेन मुख्यत्वात् तेषां व्रजभक्ता-नां फलप्रकारो लिख्यते। तत्र, निरोधोऽस्यानुशयनमात्मनः सह श-क्तिभिरिति द्वितीयस्कन्धीयशुकवाक्याच्छक्तिभिः सहितस्य भगव-तः प्रपञ्चे क्रीडा निरोधः। आत्मशब्दस्य भगवद्वाचित्वात् । अनु-शयनशब्देन तत्तल्लीलानुरूपा स्थितिरुच्यते, नतु निद्रा। पुरुषशब्दे पुरि शयनं पुरुषस्योच्यते, पुरि शेते इति व्युत्पत्त्या। तत्र स्थितिरेव शीङ्धातोरर्थो, न तु निद्रा। एवमिहापि। अत एव सुबोधिन्यां निबन्धे च, 'निरोधोऽस्यानुशयनं प्रपञ्चे क्रीडनं हरेः। शक्तिभिर्दु-र्विभाव्याभिः कृष्णस्येति हि लक्षणम्' इत्युक्तम्।

सा भगवतो निरोधरूपा लीला त्रिविधा। निरोध्यभक्तानां तामसराजससात्त्विकभेदेन त्रिविधत्वात् तत्तन्मनोरोधकतायै क्रिय-माणा लोकानुसारिणी त्रिविधा भवति। 'स्वभावस्यान्यथा भावो न वै शक्यः कथञ्चन। अतस्त्रिविधजीवेषु त्रिविधा भगवत्कृतिरिति' सु-बोधिन्याम्। तया त्रिविधलीलया क्रियमाणा भक्तानां प्रपञ्चविस्मृति-पूर्विका भगवदासक्तिः। सापि निरोधशब्दवाच्या। नितरां रोधो निरो-ध इति व्युत्पत्तेः। रोधः कस्येत्यपेक्षायां भक्तानामिति पूर्वस्कन्धसङ्ग-त्या लभ्यते। अपादानापेक्षायां प्रपञ्चो ग्राह्यः। तथा सति प्रपञ्चाद् रोध इति सिद्धम्। 'भक्ताः पूर्वत्र निर्दिष्टास्ते रोद्धव्या विमुक्तये' इति निबन्धात्। 'हरिणा ये विनिर्मुक्तास्ते मग्ना भवसागरे। ये नि-रुद्धास्त एवात्र मोदमायान्त्यहर्निशम्' इति निरोधलक्षणग्रन्थाच्च। प्रपञ्चाद्रोधेऽपि 'कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्। इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यत' इति न्यायेन प्र-पञ्चस्मरणं चेन्न भगवल्लीलानुभवे मुख्योऽधिकारः स्यादतः प्रप-ञ्चविस्मरणमपेक्षितम्। तदुपसर्गेण लभ्यते। नितरां रोधो निरोध इति, प्रपञ्चास्फूर्तिरिति यावत्। कस्मिन् निरोध इत्यपेक्षायां भगव-ति निरोध इति। 'कृष्णे निरुद्धकरणा भक्ता मुक्ता भवन्ति हीति' निबन्धात्। स हि परमरुच्युत्पादकलीलाजन्यत्वेन परमसुखरू-पत्वादासक्तिरूपः। अन्यथा निग्रहमात्रं स्यात्। तत्तु न सुखकरम्। मनोनिग्रहकर्षिता इति वाक्यात्। प्रपञ्चविस्मृतावेव भगवत्सुखा-

ऽनुभवादासक्तिरूपत्वं सिद्ध्यति निरोधस्य । अतः प्रपञ्चविस्मृतिपूर्विका भगवदासक्तिर्निरोधपदवाच्येति।'इति नन्दादयो गोपाः कृष्णरामकथां मुदा । कुर्वन्तो रममाणाश्च नाविन्दन् भववेदनाम् ॥ शय्यासनाटनालापस्नानक्रीडाशनादिषु । न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतस' इत्यादौ तथैव निरूपितत्वात् । तथाच प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिसम्पादिका प्रपञ्चाधिकरणिका भगवल्लीला निरोधपदवाच्या । सेयं भगवद्धर्मः । तादृशलीलाजन्या प्रपञ्चविस्मृतिपूर्विका भगवदासक्तिर्निरोधपदवाच्या । सा जीवधर्मः ।

तदुभयं दशमस्कन्धे प्रतिपाद्यते । 'समुदायो जन्मवाची क्रीडायुक्तस्य वै हरेः । प्रपञ्चविस्मृतिः सक्तिर्भकानां चापि योगत'इति निबन्धात् । तत्र प्रथमं तामसप्रकरणम् । व्रजस्थानां तामसत्वं त्रिविधम् । अविहितभक्तिरसानुभवसाधनरूपं पारिभाषिकमेकम् । धर्मविशेषरूपं द्वितीयम् । भगवन्मायाकृतं तृतीयं च । तत्राद्यं तु स्वमनोरथानुकूललोकसदृशभगवल्लीलारुचिमत्त्ववाह्यदर्शनैकाभिलाषवत्त्वस्ववियोगासहिष्णुत्वादिरूपम् । तामसा हि हठप्रधानास्तेषां यत्राग्रहः पतति स न गच्छति, ज्ञानरहिता मुग्धाश्च भवन्ति । ज्ञानराहित्यादेव लोकवेदोल्लङ्घनं कुर्वन्ति । व्रजस्था अपि भगवति परमाग्रहवन्तो लीलानुपयुक्तज्ञानशून्याः । 'एवं मदर्थोज्झितलोकवेदस्वानामिति'वाक्याद्भगवदर्थं लोकवेदोल्लङ्घनशीलाश्चेत्येतावद्धर्मसाम्येन तामसत्वमुच्यते, परोक्षवादाय । परोक्षप्रिया इव हि देवा इतिश्रुतेः । परोक्षं मम च प्रियमिति भगवद्वाक्याच्च । इदं तामसत्वं तामसप्रकरणे सर्वेषु भक्तेष्वनुगतम् । द्वितीयं तु यत्र यत्रोद्गच्छति तत्र तत्र तादृशकार्यं करोति । यथा 'शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा। सुरतनाथ ते शुल्कदासिका वरद निघ्नतो नेह किं वध' इत्यादिवाक्यानि । इदं तामसत्वं भावविशेषरूपम् । एवं राजसत्वसात्त्विकत्वे अपि भावविशेषरूपे एव । अत एव तामसप्रकरणस्थाया एव कस्याश्चिद्राजसीत्वम्, अन्यस्याः सात्त्विकीत्वं कस्याश्चिन्निर्गुणात्वमुच्यते । अतो ज्ञायते इदं तामसत्वादिकं भावविशेष एव । अत एव 'मधुप कितवबन्धो'इत्यादौ एतस्य तामसत्वस्यानुवृत्ती राजसप्रकरणेऽपि दृश्यते । तृतीयं तु

भगवन्मायाकार्यम् । मायात्र लीलासृष्टिस्थजीवसम्बन्धिनी ज्ञेया । 'न वव्राथेऽपवर्गं मे मोहितौ मम मायया'इत्यत्र, इयं विशेषमायेत्यादिना सुबोधिन्यामतिरिक्तायाः प्रदर्शितत्वात् । वैष्णवीं व्यतनोन्मायामित्यत्र मूले वैष्णवीपदाच्च । अतः सा पशुपुत्रगृहाद्यासक्तिं जनयति । तत्कार्यं व्रजस्थेषु प्रतीयते । अह्न्यापृतं निशि शयानमतिश्रमेणेति वाक्यात् । क्वचिद् भगवद्विस्मृतिं जनयति । 'नैवाऽशृणोद्धै रुदितं सुतस्य सेति' वाक्यात् । अतृप्तमुत्सृज्य जवेन सा ययाविति वाक्याच्च । क्वचिन्मायिकधर्माणां भगवति प्रतीतिः, 'मेहनादीनि वास्ताविल्यत्र निरूपिता । यत् सम्परेतः पुनरेव बालक इत्यादिवाक्यान्यपि अज्ञानमूलानि विशेषमायाकार्यभूतेन तामसत्वेन । अत एतस्य दोषरूपत्वम् । इदं मायाकार्यरूपं तामसत्वं भगवान् क्रमेण लीलाभिर्नाशयति । अग्रे निवर्तनीयस्यापि पूर्वं स्थापनं त्वत्यन्तविरुद्धसाधनवत्स्वपि ब्रह्मादिदुरापफलदानेन पुष्टिमार्गीयभगवन्महिमख्यापनार्थमिति ज्ञेयम् । तामसप्रकरणीयलीलासमाप्तौ इदं मायाकार्यं तामसत्वे विवृतम् । एवं तामसानां निरोधे जातेऽग्रिमकार्यार्थचिकीर्षितलीलाप्रतिबन्धकीभूतस्य आद्यतामसत्वस्य वियोगासहिष्णुत्वलोकवेदोल्लङ्घनशीलत्वादिरूपस्य निवारणम् । अत एव 'निवारयामः समुपेत्य माधवं किं नोऽकरिष्यन् कुलवृद्धबान्धवा' इत्युक्त्वापि न कृतवत्यः । तामसभावस्य परिहृतत्वात् । ततो राजसभावः । स च, 'विकुर्वन् क्रियया चाधिरनिवृत्तिश्च चेतसः । गात्रास्वाथ्यं मनोभ्रान्तं रज एतैर्निशामय'इति वाक्यान्मनोविक्षेपकर्त्ता । अत एव, 'भवतीनां वियोगो मे न हि सर्वात्मना क्वचित् । आत्मत्वाद् भक्तवश्यत्वात् सत्यवाक्त्वात् स्वभावत'इत्यादिसन्देशोपदिष्टात्मज्ञानम् एतासां जातम् । तेन, नास्माकं भगवद्वियोग इति बुद्धम् । 'ततस्ताः कृष्णसन्देशैर्व्यपेतविरहज्वराः । उद्धवं पूजयाञ्चक्रुर्ज्ञात्वात्मानमधोक्षजमिति'वाक्यात् । एवमात्मत्वेन ज्ञानानन्तरमपि, दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लवमितिवाक्यादुपदिष्टज्ञानं तिरोभवति । रजोगुणेन विक्षेपकरणात् । तथा सति भगवद्विरहोऽस्तीति ज्ञानात् पुनः खेद एव । यावद्राजसभावस्तावदुपदिष्टस्फूर्तौ विरहाभावज्ञानात् सुखम् । उपदिष्टविस्मृतौ विरहज्ञानाद् दुःखमित्युभयं वर्त्तत इति ज्ञेयम् ।

ततो राजसभावस्याऽपि निवृत्तौ सत्त्वमुर्वरितम् । तदा सात्त्विका उच्यन्ते । तत्र हि, सत्त्वात् सञ्जायते ज्ञानमितिवाक्याद् उद्धवद्वारोपदिष्टं ज्ञानं स्थिरमभूत् । अत एव कुरुक्षेत्रप्रसङ्गे, गेहञ्जुषामपि मनस्युदियात् सदा न इत्येव प्रार्थितम् । अन्यथा पुरःस्थिते भगवति व्रजे भगवदागमनं प्रार्थयेयुः । अतो भगवच्छाद्मप्रकारेण भगवन्मेलनं समीचीनं सार्वदिकं चेति ताभिर्बुद्धमित्यध्यवसीयते । ततः सत्त्वनिवृत्तौ निर्गुणावस्था । ततो भगवद्रूपतायां नित्यलीलाप्रवेशो मुक्तिः । मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिरिति । ततो रमणादिकमपि सर्वं पुरुषोत्तमात्मकमिति आश्रयप्राप्तिरिति भगवदीयैर्विभावनीयम् ।

अथाधुनिकानां पुष्टिमार्गीयाणां फलं लिख्यते ॥ तत्र श्रीमद्भागवते द्विधा बोधोऽस्तीति ज्ञेयम् । तत्रैको वाचनिको द्वितीय आर्थिक आध्यात्मिकशब्दवाच्यः । तत्र वाचनिको हि शाब्दबोधमर्यादया जायते । द्वितीयस्तु लीलातात्पर्यादिज्ञानानन्तरं ज्ञानविशेषाज्जन्यते । तत्राद्यो यथा । अहं भक्तपराधीन इति नवमस्कन्धे भगद्वाक्यश्रवणाद् भगवान् भक्ताधीन इत्यवगत्यात्मकः । द्वितीयस्तु, गोपीभिः स्तोभितोऽनृत्यद्भगवानितिवाक्यात् तादृशलीलायास्तात्पर्यज्ञानानन्तरं पुष्टिभक्तिपरवशत्वं भगवतो निर्द्धार्यते । तत्र ज्ञेयः । यथावा । योषित्सङ्गाद्यथा पुंस इति वाचनिकः । वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मन इत्यत्रार्थिकः । एवं सर्वत्रोह्यम् । सोऽयं सुबोधिनीनिबन्धादावाध्यात्मिकः पक्षस्तत्तल्लीलाप्रसङ्गे साधितोऽस्ति । एवं सति आधुनिकपुष्टिस्थानां कथं प्राप्तिरिति जिज्ञासायाम्, 'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम्' इत्यादिभिः प्रकारलाभेऽपि, 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' इत्यादिवाक्यैर्नैर्गुण्यावस्थानन्तरं फलप्राप्तिरित्याद्याकारकसिद्धान्तसिद्धावपि नैर्गुण्यानन्तरं फलमित्यार्थिकोऽपि सिद्धान्तः सम्पद्यते ।

सोऽयं भागवतमूलकयोः सुबोधिनीनिबन्धयोर्वर्त्तत इति । ततो बोधसौकर्यायोद्धृत्य लिख्यते । तत्र येषु जीवेषु भगवता पारमार्थिकफलविशेषसाधनार्थमलौकिकानुग्रहविशेषेण पुष्टिभक्तिर्बीजरूपा स्थापितास्ति ते पुष्टिमार्गीयाः । तेषां साधनैः फलं भविष्यतीति

प्रकारो निर्द्धार्यते । तत्र, त्रैगुण्यं सर्वे एव हीति भगवद्वाक्यात् ते मायाकार्यतामसादिगुणैर्व्याप्ताः सन्ति । यद्यपि सर्वेषु त्रयो गुणाः सन्ति, तथाऽपि, प्राधान्येन व्यपदेशा भवन्तीति न्यायेन यस्मिन् यस्य गुणस्याऽऽधिक्यं स तेन गुणेन व्यपदिश्यते । तत्र सात्त्विकानां सेवाश्रवणादिसाधनैः शीघ्रं प्रेमोत्पत्तिः। अत एवोक्तं निबन्धे । सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिण इति, निबन्धीयसेवाप्रकरणे, सात्त्विकानुपदिशतीति च। अतस्ते प्रथमाधिकारिणः। शिष्टौ मध्यमहीनौ । अत एव भक्तिस्कन्धीयभक्तेषु हीनमध्यमोत्तमाः सर्वेऽपि कथिताः । 'पुंसामीशकथाः प्रोक्ता हरेश्चास्यानुवर्त्तिनाम्' इत्यनेन सामान्यतः सर्वेषां भक्तत्वं सूचितम् । अधुना तु कलिकालदोषान्मोहलोभादियुतास्तामसा राजसा बहवः सन्ति । ते हि पूर्वस्थापितस्य पुष्टिभक्तिबीजस्य अनश्वरत्वेन सत्त्वाद् भगवत्परिचर्याश्रवणादि कुर्वाणा अपि दोषप्राबल्यान्न प्रेमलक्षणां भक्तिं लभन्ते । प्रतिबन्धकाभावस्य सर्वत्र कारणत्वात् । तेषाम्, आदरः परिचर्यायामित्यादिभगवदुक्तसेवाश्रवणादिसाधनैर्बीजदार्ढ्ये सति सेवयैव क्रमेण तमोरजःसत्त्वानि निवर्त्तन्ते । मां च योऽव्यभिचारेण भक्तियोगेन सेवते इत्यादिवाक्यात् । तदेतद् गोकुलस्थानां प्रसङ्गे सूचितं च । यतस्तेषां पूर्वं तमो निवृत्तम् । पश्चाद्रजःसत्त्वे । तदुक्तं निबन्धे । 'इतोऽपि चेद्धरिर्गच्छेन्नीत्वा सर्वस्य तामसम् । राजसास्ते भविष्यन्ति गोकुलस्था न संशयः । उभये च ततस्त्वग्रे सात्त्विकास्त्वगुणास्ततः। त्रयोऽपि सम्भविष्यन्ति मुक्तौ तेषां निरूपणम्' इति । इतोऽपि चेदित्यादि । ननु तामसप्रकरणीयलीलासमाप्तिपर्यन्तं गोकुलस्थानां तामसत्वं स्थितमेव पश्चाद्भगवन्मथुरागमनानन्तरं लीलानां बाह्यतस्तिरोभावाच्छास्त्रीयसाधनानां च गोकुलस्थेऽभावात् कथं तामसभावनिवृत्तिरित्याशङ्क्य तन्निवृत्तिप्रकारमाहुः । इतोऽपि चेदित्यादिना । अयमर्थः । यद्यपीह भक्तिशास्त्रीयमर्यादाविचारे तामसत्वनिवृत्तौ न किञ्चित् कारणम् । कारणाभावेऽपि यदि कार्योत्पत्तिस्तदा सर्वमर्यादोच्छेदः स्यात् । तथापि हरिश्चेत्तामसत्वं स्वयं गृहीत्वा गच्छेत् तदा शास्त्रीयमर्यादाया दुर्बलत्वात् तामसत्वं गच्छत्येव । अतः प्रमेयबलस्यैव मुख्यत्वं, न प्रमाणबलस्येति । प्रमेयबलेन राजसास्ते भविष्यन्ति । अस्मिन्नर्थे संशयो नास्ति । अतो न

कश्चिद्विरोधः। न वा मर्यादाभङ्गः। प्रमाणबलविचारे तथात्वेऽपि प्रमेयबलविचारेण समाधानादिति कारिकार्थः फलितः। यद्यपि लीलासृष्टिस्थभक्तास्तु, 'यो नन्दः परमानन्दो यशोदा मुक्तिरूपिणी। गोप्यो गाव ऋचस्तस्य' इत्यादिभिः कृष्णोपनिषत्स्वतिश्लाघितस्वरूपाः प्रापञ्चिकविलक्षणास्तथाऽप्यंशविशेषे दृष्टान्तीकरणान्न दोषः। नच पुष्टिभक्तेर्निर्गुणत्वात्तद्वतो राजसत्वं तामसत्वं च न सम्भवतीति वाच्यम्। वृत्रे तामसत्वदर्शनात्। रजस्तमःस्वभावस्य ब्रह्मन् वृत्रस्य पाप्मन इति वाक्यात्। अजातपक्षा इव मातरं खगा इत्यादिवाक्यैर्वृत्रस्य पुष्टिभक्तत्वनिर्द्धारात्। अतो भक्तेर्निर्गुणत्वेऽपि भक्तानां सगुणत्वमस्त्येव। अभिसन्धाय यद्धिंसामित्यादिवाक्यैस्तादृक्कामजन्याया एव भक्तेः सगुणत्वं, न त्वस्याः। अत इयं भक्तिर्निर्गुणैव। भक्तानां तु त्रैविध्यं वर्तत एव।

अत आधुनिकानां पुष्टिभक्तानां साधनसापेक्षत्वादादित आरभ्य सेवाश्रवणादिप्रकारस्तामसादिगुणनिवृत्तिप्रकार आध्यात्मिकरीत्या निरूप्यते। तथाहि। यथा लीलासृष्टौ तामसप्रकरणारम्भे प्रथमाध्याये भगवदाविर्भावोत्सवस्तथेहापि साधकस्य श्रीमूर्तेराविर्भावोत्सवः। अत एव निबन्धे सेवाप्रकरणे, एनमुद्धरिष्यामीति तदा मृदादेः प्रादुर्भूत इत्युक्तम्। मूर्तिरूपेण प्रभोराविर्भाव एवाङ्गीकृतः। तथा यत्र। यथा, नेह स्थेयं बहुतिथं सन्त्युत्पाताश्च गोकुल इत्यनेन प्रादुर्भूतभगवत्सुखानुभवप्रतिबन्धकज्ञाने वसुदेवस्य कारणता एवमत्रापि गुरोः सकाशाद्भक्तिमार्गप्रतिबन्धकज्ञानम्। ततः पूतनामरणं सा चाऽविद्यारूपा। अविद्या पूतना नष्टा इति वाक्यात्। नच पूतनाबकादीनामविद्यादम्भादिरूपत्वे मानाभाव इति वाच्यम्। लोभक्रोधादयो दैत्या इति कृष्णोपनिषत्सु सर्वेषां दैत्यानां परिदृश्यमानस्वरूपातिरिक्तलोभादिरूपत्वेन प्रतिपादनात्। लोभक्रोधादयो दैत्या इत्यत्रादिशब्देन सर्वेषां संग्रहात्। एतदुपनिषन्मूलिकैव धेनुकादौ देहाध्यासत्वाद्युक्तिः सुबोधिन्यामिति ज्ञेयम्। एवं सति तत्र अविद्यारूपा पूतना नाशिता तथेहापि भगवद्बहिर्मुखत्वसम्पादिका अविद्या सेव्यमानेन प्रभुणा नाश्यते। सकृद्दिष्टाऽऽदिपुरुषमिति वाक्यात्। तत्र यथा वसुदेवमुखादुत्पातश्रवणे, तन्निवृत्त्यर्थं श्रीनन्देन, हरिं जगाम शरणमिति वाक्याच्छरणागमनं

कृतं तथेह साधकेन गुरुद्वारा भक्तिमार्गप्रतिबन्धकानि श्रुत्वा तन्नि-
वृत्तये हरिशरणागमनं कार्यम् । तदुक्तं निबन्धे ।

आद्ये तु भगवन्मार्गे बाधकानि बहूनि हि ।
द्वितीये तदभावो हि हरिणैव भवेदिति ।

तत्र यथा पूर्वं सञ्चितस्वासक्तिविषयीभूतभगवदनुपयुक्तगृ-
हरूपशकटस्य भक्तिरूपचरणेनोत्क्षेपणमेवं साधकस्यापि भगवद-
नुपयुक्तवस्तुसम्बन्धो निवर्तते । तृणावर्तो भगवत्साक्षात्कारप्रति-
बन्धरूपो रजोगुणात्मा हतः । एवमस्यापि भजनप्रतिबन्धरूपो रजो
गुणो नश्यति । ततो यथा श्रीयशोदाया विश्वरूपदर्शनेन महिम-
ज्ञापनं, तथेहापि साधकस्य सेव्यस्वरूपे स्वप्नादिद्वारा कश्चिदनु-
भावो ज्ञाप्यते । ततो गर्गेण एकान्ते भगवन्नामान्युक्तानि । तत्र
रूपगुणलीलावैशिष्ट्यं निरूपितम् । 'बहूनि सन्ति नामानि रूपाणि
च सुतस्य ते । गुणकर्मानुरूपाणि तान्यहं वेद नो जना' इत्यनेन
सन्तीति प्रयोगेण तेषां नामरूपगुणकर्मणां नित्यत्वं बोधितम् ।

तथाच सिद्धमेतत् । साधकेन भगवदीयमुखाद् गुणली-
लाविशिष्टानां नाम्नां दुःसङ्गवर्जनपूर्वकं स्वरूपं श्रुत्वा तत्तल्ली-
लासंयुतस्वरूपगुणस्मरणपूर्वकं तन्नाम ग्राह्यम् । यथा गोवर्द्धनो-
द्धरणधीर इति नामग्रहणे गोवर्द्धनोद्धरणात्मकलीलाविशिष्टं वाम-
करकमलधृतगोवर्द्धनं श्रीकृष्णस्वरूपं हृद्ध्यानेयमिति । एतच्च नाम-
करणप्रसङ्गसुबोधिन्यां विस्तृतं श्रीमदाचार्यचरणैः ।

ततो जानुरिङ्गणलीलायां, द्वे जानुनी सुतलं विश्वमूर्त्ते-
रिति वाक्याज्जानुनोः सुतलाधिदैविकत्वात् । तत्र च दैत्यानां निवा-
साज्जानुभ्यां गमनेन गुप्ततयैवालौकिकप्रकारेण दैत्यमर्दनमाचरित-
म् । तथेहापि सेव्यमानो भगवान् अनेकधा स्थितान् अज्ञातानपि
बहूनासुरभावान् दूरीकरोति । चौर्यादिप्रसङ्गे व्रजसुन्दरीभिर्भगव-
तो दोषेषु निवेदितेषु महिमज्ञानाभावेऽपि केवलस्नेहान्न मातृचर-
णैर्दोषा गृहीताः । न ह्युपालब्धुमैच्छदिति वाक्यात् । एवमेव
भगवदीयो ज्ञानरहितोऽपि भजनस्वभावान्न भगवति दोषं गृह्णा-
ति । ततो मृद्भक्षणप्रसङ्गे, नाहं भक्षितवानम्बेत्यादिना सर्वसाधारण-
रीत्या प्रतीतोऽशनरूपो धर्मो मयि नास्ति । क्षुत् खलु वै मनुष्यस्य
भ्रातृव्य इति श्रुतेर्भक्षणकारणीभूतक्षुधो मनुष्याऽसाधारणधर्मत्वेन

मय्यभावादित्युक्तं हरिणा । तथाच क्षुधितः सन्नाश्नाति, भक्तिपूर्वकं भक्तेन दत्तमश्नात्येव । 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मन'इति वाक्यात् । अशनं चात्र भोगो, न तु भक्षणमात्रम् । पुष्पादीनां संग्रहात् । तथाच सर्वमेव वासोभूषणस्रगादि भक्त्यादत्तं स्वीकरोति । अत इमं प्रकारं बुद्ध्वा नैवेद्यादि भक्त्यैव समर्पणीयमिति लभ्यते स्म । एतत्तु मृद्भक्षणप्रसङ्गटिप्पण्यां स्फुटम् । श्रीमातृचरणानां साधारणरीत्याऽशनधर्मे प्रतीते मुखं व्यादाय विश्वरूपं प्रदर्श्य सर्वसाधारणनिखिलधर्माऽभावो बोधितः । अग्रे तु, यन्माययेत्थं कुमतिः स मे गतिरिति वाक्यात् स्नेहस्य सर्वथा तिरोधाने, वैष्णवीं व्यवतनोन्मायामिति वाक्याल्लीलास्थजीवनियामिकया वैष्णव्या मायया मोहयित्वा स्नेहं वर्द्धितवान् । एवमस्यापि सेव्यस्वरूपे लौकिकभावस्फूर्त्तौ तन्निराकृतये भागवताद्यर्थविशेषस्फुरणेन महिमानं बोधयति । तत्राप्यत्यन्तमहिमस्फूर्त्तौ स्नेहोपचारशैथिल्ये स्नेहिभक्तसङ्गादिना स्नेहोपचारश्रद्धां द्रढयति भगवान् । ततो, द्रोणो वसूनां प्रवर इत्यादिप्रश्नोत्तराभ्यां श्रीनन्दयशोदयोर्भक्तौ महापुरुषकृपैव कारणमिति सिद्धान्तितम् । एवमिहापि श्रीमदाचार्यचरणश्रीविठ्ठलेश्वरकृपातो भक्तिर्भवतीति ज्ञेयम् । ततो मातृचरणानां दधिमन्थनावसरे भगवद्गुणगानं, दधिनिर्मन्थने काले स्मरन्ती तान्यगायतेति वाक्यात् । एवं साधकेनापि गुणगानादि कुर्वतैव व्यावृत्तिः कार्या । ततो दधिमण्डभाजनभेदः । शिक्यस्थनवनीतस्य मर्कटेभ्यो दानम् । तदुभाभ्यामिदं सिद्ध्यति । भगवदावेशाभावदशायां भगवदितरभोगोपयोगबुद्ध्या सम्पादितान् पदार्थान्नाङ्गीकरोति भगवान् । एवं सति समर्पणीयस्य वस्तुनः संपादनदशामारभ्य भगवदुपयोगसमयावधि चित्तस्य कृष्णैकपरतैव रक्षणीयेति बोद्धव्यं साधकेन । ततः श्रीयशोदा दाम्ना बद्धुं प्रवृत्ता । तथा न बद्धः । यदा खेदं दृष्टवान् भगवाँस्तदा कृपया भक्तवश्यतां सूचयन् बद्धोऽभूत् । तथा साधकोऽप्यनेकसंभृतसपर्यया न पुरुषोत्तमं वशीकर्त्तुं शक्नोत्यपि तु भक्त्यैव । ततो यमलार्जुनप्रसङ्गे भगवदीयनारदसमागमेन श्रीमदरूपमहादोषजन्यस्त्रीसङ्गादिनिवृत्तौ व्रजे वृक्षदेहं प्राप्य स्थितौ नलकूबरमणिग्रीवौ

हरिर्मोचितवान् । तत्रापि, तत्तथा साधयिष्यामि यद्गीतं तन्महाऽऽत्मनेति भक्तानुगृहीतौ मोचयिष्यामीत्युक्तवान् प्रभुः । अतो भक्तानां सङ्गमः सकलपुमर्थसाधक इति सिद्धम् । ततो गोपीभिः स्तोभितोऽनृत्यदित्यत्र भक्तिवश्यत्वं स्फुटमेव । ततो वृन्दावनक्रीडा । तत्र, चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदाविति वाक्याद्, भ्रमरचक्रसूक्ष्मदण्डकाष्ठखण्डकृत्रिमरथवादित्राकर्षणादीनि क्रीडापरिच्छदानि गृहीत्वा क्रीडति हरिः । एवं सति सेवायामपि तानि स्थापनीयानि । 'एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने' इति पञ्चदशाध्याये वक्ष्यमाणत्वाच्च । यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः । तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पत' इति भगवद्वाक्याच्च । विस्तृतं चैतत् सेवाकौमुद्याम् । ततो वत्सासुरवधः । स हि वत्सचारणसामग्रीरूपाणां वत्सानां दोषरूपः । तस्य निवारणेन वत्सा निर्दोषाः कृताः । एवमिहापि सेवोपयोगिसामग्री प्रभुणा शोध्यते । तत्र यथा वयस्यानां भक्तानां दोषरूपो लोभानृतसहितदम्भात्मको नाशितस्तथेहापि लोभाऽनृतसहितो दम्भादिदोषः सेवया नश्यति । तत्र यथा 'इति नन्दादयो गोपा' इति वाक्याद् गुणगानं प्रेम च सूचितं, तथात्र भगवदीयादिरूपगुणगानम् । एवं प्रमाणप्रकरणसमाप्तौ यथा तेषां प्रेमपूर्णत्वं सिद्धं तथात्र साधकस्य एतावत्साधनसम्पत्तौ प्रेम पूर्णमुत्पद्यते । तत्र यथा देहाध्यासरूपो धेनुको नाशितस्तथात्र सेवाकर्तुर्देहस्य स्वकीयत्वाध्यासो गच्छति । यथा कालीयशिरांसि विषयसंसृष्टेन्द्रियरूपाणि चरणारविन्देन भक्तिरूपेण विमर्द्य शोधितानि । 'अनुग्रहोऽयं भवता कृतो हि न' इति वाक्यात् । तथेहापि विषयोन्मुखानीन्द्रियाणि भजनेन संशोध्य भगवत्पराणि क्रियन्ते । यथा इन्द्रियदोषाभिमानिनो दावाग्नेः सकाशात् सर्वेषां रक्षा, तथेहापीन्द्रियदोषनियामकादासुरभावाद् भक्तस्य रक्षा । यथा अन्तःकरणदोषात्मप्रलम्बो हत एवमिहापि सेवां कुर्वतोऽन्तःकरणदोषा निवर्त्तन्ते । यथा अज्ञानात्मा आत्मदोषो द्वितीयो दावाग्निस्तन्निवृत्तिः कृता, तद्वदत्रापि स्वरूपाज्ञाननिवृत्तिर्भवति । यथा भक्तानां भावविशेषेण गानम् अष्टादशाध्याये निरूपितं, तथेहापि सेवाया अनवसरे भगवतः कीर्त्तनादिरूपं गानम् । तत इन्द्रयागभङ्गं कृत्वा स्वयागः कारितः । तत्र शक्रकृतोपद्रवे गोवर्द्धनोद्धर-

णेन व्रजो रक्षितस्तथा सति साधकैरन्याश्रयो न कर्त्तव्यः ।

एवं सति केवलभगवदाश्रये यदि कश्चिदुपद्रवो भवेत् तदा भगवान् पालयिष्यतीति विश्वासो रक्षणीय । एवं भगवदुक्तवर्णाश्रमधर्माचरणेन परोपकारादिधर्माचरणेन च वैष्णवान्नभक्षणेनाऽन्याश्रयत्यागेन भगवान् सेव्यः। ततः कुमारिकाव्रतप्रसङ्गे यज्ञपत्नीव्रतप्रसङ्गे यथाऽऽध्यात्मिकः पक्षः सिद्धः। तदुक्तं निबन्धे। 'कृष्णवाक्यं सदा कार्यं मायामोहं निवार्य हि। वृक्षवत्तु स्थितिः कार्या शुद्धान्नेन च वर्त्तयेद्' इति । अयमर्थः। व्रतप्रसङ्गे अग्निकुमारैर्लज्जां परित्यज्य सर्वं कृतं, तेन भगवत्प्रसादोऽभूत् । अतो भगवद्वाक्यं सर्वथा कर्त्तव्यम् । तदत्र श्रुतिस्मृत्यादिरूपं कर्त्तव्यमिति फलितम् । मायामोहं निवार्य वृक्षवत्तु स्थितिः कार्येति । मायया जातो यो मोहो ममेदमित्यज्ञानात्मकस्तं दूरीकृत्य वृक्षवत् केवलपरोपकारतया स्थेयम् । अहो एषां वरं जन्म इत्यारभ्य, तौकर्मैः कामान् वितन्वत' इत्यनेन परोपकृतेः प्रभुणोपदिष्टत्वात् । शुद्धान्नेन च वर्तयेदिति । ' एषा वै ' बाधते क्षुन्न' इति गोपविज्ञापितो, मां ज्ञापयत पत्नीभ्य इत्युक्त्वा यज्ञपत्नीसन्निधौ प्रेषयित्वा ताभिरानीतेनान्नेन गोपानां तृप्तिः सम्पादिता । ता हि भगवदीयाः । ' भगवत्युत्तमश्लोके दीर्घश्रुतधृताशया ' इति वाक्यात् । अत इदमत्र लब्धं, वैष्णवानामेवान्नं ग्राह्यम् । तत उक्तम्, शुद्धान्नेन च वर्तयेदिति। तत 'एवंविधा भगवतो या वृन्दावनचारिणः। वर्णयन्त्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुरिति वाक्यात् । यथा तासामासक्तिरेवं साधकस्याप्येतावत्साधनसम्पत्तावासक्तिः सिद्ध्यति । प्रतिबन्धकपापनाशे भगवत्प्रसादे च क्रियमाणायाः श्रवणादिरूपायाः पोषो बीजभावदार्ढ्यव्यसनभावरूपो भगवति भवति। ततो वृद्धौ क्रमेण गुणानां नाशः। लीलासृष्टिस्थानां यथा, 'दर्शयामास लोकं स्वं गोपानां तमसः परम् । सत्यं ज्ञानमनन्तं यद् ब्रह्म ज्योतिः सनातनमिति' वाक्याद् व्यापिवैकुण्ठात्मकाऽक्षरब्रह्मानुभवस्तथा पूर्वोक्तरीत्या सेवया व्यसनसिद्धौ गुणनाशे ब्रह्मभावः । 'स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः । येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यत' इति वाक्यात् । ततः फलप्रकरणे यथा सर्वात्मभाववतीनां तासां भजनानन्दानुभवस्तथेह साधकस्यापि सर्वात्मभावोत्पत्तौ सदैव पुरुषोत्तमाविर्भावात् सेवायां भजनानन्दानुभवः फ-

लति। ततो, भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते इतिसूत्रभाष्योक्त-रीत्या स्थूललिङ्गशरीरयोर्नाशे भगवल्लीलोपयोगिदेहं प्राप्य नित्य-लीलायां प्रविशति । स एव मुक्तिपदार्थः । मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिरिति लक्षणात्। तत्र च, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति श्रुत्युक्तरीत्या पुरुषोत्तमेन सह पुरुषोत्त-मात्मकानां पुरुषोत्तमात्मकभोगाशनमाश्रयप्राप्तिरिति निष्कर्षः ।

निरोधलीलामुक्ताथ मुक्तिस्तदनुवर्ण्यते ।
मुक्तानामश्रयः कृष्णो नान्येषामिति शाश्वत इति सुबोधिन्याः ।

इति श्रीमद्गोवर्द्धनधरश्रीवल्लभाचार्यश्रीविठ्ठलेश्वरचरणानुचर-सेवकेन लालूभट्टोपनामबालकृष्णेन कृते प्रमेय-रत्नार्णवे पुष्टिमार्गीयफलविवेकः समाप्तिमफाणीत् ॥ ७ ॥